January, 1945. Reg. No. C. 1073







सम्पादकः—
महामहोपाध्याया-
नन्तकृष्णशास्त्री
सहकारिसम्पादकः—
श्रीजानकीनाथ-
शास्त्री




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1945. | १८६६-शकीये पौषे<br>२७श-वर्षस्य ६म-संख्या | Vol. XXVII, No. 9. |

## देवीशतकम्

[ रचयिता—महामहोपाध्यायश्रीकृष्णनाथसार्वभौमभट्टाचार्यः ]

( पूर्वानुवृत्तम् )

अगम्यासम्भोगा द्विजनिवहहत्या अपि कृता
अमेध्यानां पानं वरकनकचौर्य्यञ्च कलितम् ।
तथान्यद्दुष्कर्म्माण्यणुमिह हि मन्ये विपतभी-
र्यदि स्यात्त्वत्पादे क्षणमपि विलीनं मम मनः ॥४५॥

धरायां पातालेऽमरभुवि च नास्ते यदवशं
कृतान्तादप्युग्राद् भयमिह नवा स्तोकमपि मे ।
तदाद्वैतं ज्ञानं विरमति चिरादुद्गतबलं
भवानि त्वत्पादे भवति यदि भक्तिः क्षणमपि ॥४६॥

वचोऽधीशां स्तोतुं धनमखिलदात्र्यै(१) वितरितु-
मदृश्यां योगीन्द्रैर्हिमगिरिसुतां वीक्षितुमपि।
महेशध्येयाङ्घ्रिं मनुज इह को ध्यातुमवनौ
विरिञ्च्यादेः सेव्यां परिचरितुमद्य प्रभवति ॥४७॥

हृषीकाधिष्ठात्री विषयबहुभोगं कलयसि
जगद्रूपं धात्री न कति कुतुकानि प्रकुरुषे।
कथं जीवीभूयोदरगहनदुःखान्यनुभव-
स्यसौ चिन्ता गुर्वी मम चटुलचित्तं व्यथयति ॥४८॥

त्वमात्मानं तत्तद्बहुविधशरीरेषु वितर-
स्यनेकत्वं गत्वा सृजसि कथमेतद् भगवती।
कथं मायादाम्नाविरतमपि बध्नासि बहुधा
मुहुर्मुह्यन्त्यस्मिन् हरिहरविरिञ्चिप्रभृतयः ॥४९॥

जगद्रक्षायै त्वत्कृतमपि मनोजं पुरहर-(२)
स्तदीयानीतिभ्यो विकलमखिलं वीक्ष्य हतवान्।
त्वमद्या दृग्भङ्ग्या जनयसि पुनस्तत्र तमहो
जगन्नाशायेति प्रबलतरचिन्ता ज्वरयति ॥५०॥

शिवे प्रेम्णा पूतं मधुसुमधुरं(३) नाम जपत-
स्तवैकं शान्तं स्याद् यदि शमनपाणिप्रहरणम्।
तदा मातर्वेद-त्रिपुरहरशास्त्रेषु सुधियः
कथं चेतोदध्युर्मम(४) हृदयमेतद् गणयति ॥५१॥

हरौ नम्रा स्निग्धा कमलभुवि चानुग्रहयुता
क्षितीशानां वृन्दे भवति तव कारुण्यमिलिता।
अपूर्वा दृग्भङ्गी प्रणयजटिनि प्रेमतरला
मयि स्याद्वा न स्यादिति कठिनचिन्ता ज्वरयति ॥५२॥

---

१। धनदधनदात्र्यै—ख। २। स्मरमपि च कर्त्ता पुर०—ख।
३। भक्त्या द्राक्षामधुरमधुरं—ख। ४। मातर्दध्यु०—ख।

बहिर्द्वारे द्वाःस्थैः स्थगितगमना वासवमुखा-
स्ततोऽन्तर्ब्रह्माद्यास्तव पुरि नता गोपुरगताः ।
कदा ज्ञात्वा नेतुं सरति पुरतः काचिदिति ते
स्थिता भक्त्यैव त्वमि ... ... ... ना ॥५३॥

हरे देव्याज्ञातं प्रविश पुरतस्तन्मृदुगिरा
महेन्द्रः श्रीजानिं त्वरितमनुगन्तुं व्यवसितः ।
अथ स्पृष्ट्वा पाणिं नयति करणेशं परिजने
ह्रिया नम्रः शक्रो निजपरिजनान् वीक्ष्य विमनाः ॥५४॥

यथार्थास्त्यक्त्वेव प्रमथगणमुख्ये परिजने
मणिप्राचीरान्तर्विलिखति विरिञ्च्यादिविबुधान् ।
पुरीं नेतुं तेषां धृतवति करांस्तद्दिविसदा-
नहं ब्रह्मेत्याद्या जननि तव पुर्य्यां मृदुगिरः ॥५५॥

प्रवेशे पुर्य्यन्तर्मुरहरविरिञ्च्यादिविबुधान्
निरीक्ष्यैका ब्रूते सहचरि क एतेऽग्रत इति ।
ततोऽसावूचे तामरुणतरदीप्तिः कमलभू-
स्तमःश्यामो विष्णुर्बहुनयनभृद् वृत्रदमनः ॥५६॥

अयं वाणीजानिस्तदनु परमेष्ठी प्रणमति
सुराध्यक्षस्तस्माद्दिगधिपतयः सिद्धनिवहाः ।
गिरैवं नीलेन्दीवरविमलदामप्रणयिनी
भवानीदृग्लीला सुरनिकरमौलौ विजयते ॥५७॥

विरिञ्चिः पादाब्जे नखररुचिरालक्तकरसः
समुद्यत्पीठान्तर्मरकतमणिः पीतवसनः ।
हरोऽभूत पल्यङ्कस्फटिकवरवेदी गिरिभुवो
न को देवो देव्याः किमपि भवितुं वाञ्छति पुरे ॥५८॥

महेन्द्रानीतायां सुरविटपिपुष्पस्रजि कियान्
भवान्या नीलेन्दीवरनयनपातः समजनि ।

इति स्वैरं पुर्य्यां परिजनमुखोदीरितगिरा
स्वबद्धाराक्षोऽसौ(१) पुलकिततनुर्जम्भदमनः ॥५९॥
नखेन्दावाद्यायाः प्रतिफलितमीषन्मुरहरं
विरिञ्चयाद्या दृष्ट्वा चकितचकितं शीत्कृतिभृतः।
गुणाढ्यन्तद्भाग्यं सदसि विबुधानामतिमुदा
सुराध्यक्षं चख्युस्तमिति महिमा ते विजयते ॥६०॥
चतुर्वक्त्रो वेदैर्मुरजिदपि भक्त्या परमया
महेन्द्रः कल्पद्रुप्रभवकुसुमैः किन्नरगणाः।
सुगीतैर्गन्धर्व्वा नटनपरिपाटीपटुतया
तवाम्बाया एते चरणवरिवस्यां विदधते ॥६१॥
महेशो मूर्द्धस्थां निभृतदयितां पाद्यमकरोद्
जटाजूटैश्चार्घ्यं पुलकपटलीव्यापिततनुः।
तथैवानन्दास्रैर्मुररिपुरभूदाचमनदो
महापूर्व्वा देव्या विबुधवरिवस्या विजयते ॥६२॥
प्रसीद त्राहीति प्रसरति रवे ब्रह्मवदनात्
परीवारैस्तस्मिन् मृदुमृदुवचोभिः परिचिते।
मरुल्लीलादोलत्कमलदलशोभाविजयिनी
त्वदीया दृग्भङ्गी भगवति विरिञ्चौ विलसति ॥६३॥
कपोतानां पुर्य्याः(२) क्वणितमनुकर्त्तुं कुतुकिनो
न के वा गन्धर्व्वा वदनविकृतिं संविदधते।
निरीक्ष्य स्वीयाङ्गं स्फटिकभुवि गन्धर्व्ववनिता
न मालिन्यं वक्त्रे दधति बत का वा विमनसः ॥६४॥
महातीव्रज्वालाजनिततनुसम्भूतमहसा
समुत्तप्तं देव्याः पुरमिति भयोद्विग्नमनसा।

---

१। नेत्रः—ख। २। पुर्यां—ख।

दिवानाथः साङ्गं हुतभुगपि गोप्तं हि यतते
न जानीते मौढ्यात् पदनलिनपीयूषतुहिनम्(१) ॥६५॥
जगद्वन्द्यामाद्यां परमपददात्रीं निज(२)जने
प्रणन्तुं गच्छन्तं रवितनयमालोक्य विजयाम् ।
अयं कालः प्राणान् हरति नियतं जीवनभृता-
मिति क्रुद्धां ज्ञात्वा भयमृदुपदं याति स पुरः ॥६६॥
जगत्सृष्टिं रक्षां प्रलयमपि दृष्टेः कणिकया
करोषि त्वं मातस्त्रिभुवनशिरोरत्नचरणा ।
हिमांशुस्त्वद्भाले स्थित इति मुहुः क्षुब्धहृदयो
विभज्याङ्गं मन्ये पदनखरतां प्राप्य मुदितः ॥६७॥
दिगैश्वर्य्यं देवैस्त्रिदिवपतिता वृत्ररिपुणा
परानन्दो भक्तैर्जलधितनया देवि हरिणा ।
गिरामीशत्वञ्च त्रिदशगुरुणालम्भि तदहो
न केषामुन्नत्यै भवति तव दृष्टिः सकरुणा ॥६८॥
हरः स्तोत्रं कुर्वन्नमति पुरतः पादनलिनं
निशम्येता...वदनकमलात् कोमलगिरः ।
सुधाधारां तुच्छामिव विदधती कापि मधुरा
भवान्या वक्त्रेन्दोर्जयति कियती हास्यकणिका ॥६९॥
स्वयम्भूश्रीजानिप्रमुखमुखतः स्तोत्रसमये
जगन्मातस्त्राहीत्यनुसरति भूविम्बनिचये ।
गणाध्यक्षः स्मेरः सकष(?)नयना जह्नुतनया
शिवः साचीवक्त्रः शिखरितनयाप्यानतमुखी ॥७०॥
त्वदीयाङ्घ्रिद्वन्द्वे नतशिरसि शम्भौ सुरधुनी
नमन्मौलिः स्वैरं स्मरहरजटामध्यमविशत् ।

---

१। ०भवनम्—क। २। नतु—ख।

तदालोक्य स्मेरान् तव परिजनान् वीक्ष्य पुरभित
त्रपासङ्कोचाभ्यां भवति मतिहृद्विह्वल इव ॥७१॥
च्युता पादाम्भोजाज्जगदवनकर्तुः पुरभिद-
श्चिरं मूर्ध्नि स्थित्वा कमलकुलसौख्यं न लभते ।
हरे नम्रे पादात्तदलभत ते जह्नुतनया
भवेत् सापत्न्येऽपि प्रणयरचनातीव महताम् ॥७२॥
जटाजूटस्पन्दादभिमुखपतज्जह्नुतनयो-
च्छलन्मुक्तादाम्नि प्रणिहितकरो धूर्जटिविभुः ।
कियच्छोणं कोणं तव नयनयोर्वीक्ष्य विधुरः
पदाब्जे कातर्याच्चकितचकितं हन्त लुठति ॥७३॥
कपाली भस्मास्थिप्रचयनिचितस्ते प्रियतमो
विचिन्त्यैतच्चेतः क्षणमिह विमुग्धं समजनि ।
ततोऽमानि स्पृष्टस्तव करुणया योऽतिसुकृती
स भोगिभ्यो भिन्नो भजति विपरीतां श्रियमपि ॥७४॥
तनोरर्द्धं कस्मादलभत चिरं धूर्जटिरसौ
त्रिलोकी मुग्धास्मिन् न खलु बत तत्त्वं गतवती ।
अहं शङ्के पङ्केरुहचरणयुग्मे तव सदा
दृढप्रेमा भक्तिः सकलमपि कर्तुं प्रभवति ॥७५॥
विषज्वालादग्धः शिरसि जटयज्जह्नुतनयां
ललाटे शीतांशुं चिरमपि वहन्(१) धूर्जटिरसौ ।
अनिर्वृत्या त(२)स्माद्धिमगिरिसुते शीतलतमं
पदाम्भोजद्वन्द्वं तव हृदि विधायैव रमते ॥७६॥
पदद्वन्द्वे देव्याः द्वितयकरसंवाहनकरीं
सखीं दूरीकुर्वन्ननुनयगिरा धूर्जटिरहो ।

१। वहति नियतं—ख। २। अनिर्विण्णस्तं—ख।

यदा मन्दं मन्दं हुतभुगनुकारी(?) प्रभुरभू-
त्तदा स्पर्शादस्य स्फुटति जननीहास्यकुसुमम् ॥७७॥
सुराधाराधारे त्रिभुवनतमःस्तोमदमने
स्फुरन्नेत्रस्निग्धाञ्जनरुचिरसल्लाञ्छनधरे ।
तवाद्योद्यद्वक्त्रे तुहिनकरविम्बे विजयिनि
कुहूर्नाम्नैवास्ते पिकनिकरकण्ठैकशरणा ॥७८॥
ललाटे सिन्दूरद्युमणिशशभृद्भित्तमिलना-
दमावास्या सर्व्वा तिथिरिति सदाहुः पितृगणाः ।
शरत्पूर्णं चन्द्रं तव जननि संवीक्ष्य वदनं
वदन्त्यद्धा राकेत्यविकृतमुखा देवनिवहाः ॥७९॥
विघूर्णन्ते पङ्के भवजलनिधेः पापमनसां
मनांस्यत्युन्मत्तद्विरदपतयः कातरधियः ।
महत्तच्चित्रं मे स्फुरति हृदि रक्षार्थमधुना
यदेते याचन्ते जननि तव पञ्चामनपदम्(?) ॥८०॥
सदा सर्व्वस्मिन या प्रतिवसति सूक्ष्माकृतिधरा
दयार्थं जीवानामकलितशरीरापि भवती ।
अयं हा त्यक्त्वा तां विषयरसकूपं हि भजते
विहायाङ्के कल्पद्रुममटति मूर्खः कुमतिभिः ॥८१॥
न ते ध्यातं पादाम्बुजमपि न गीतं तव यशो
न पीतं श्रद्धाभिस्तव चरणनिर्णेजनमपि ।
न वा दूर्व्वाकाण्डैरपि चरणसेवा विरचिता
जगद्धात्री दात्री गतिमिह न जाने कतिविधाम् ॥८२॥
चिरं भुक्ते भुक्ते कलयसि जड़ीभूतरसनां
चिरं दृष्टे दृष्टे भ्रमयसि च नेत्रं प्रतिजनु ।
चिरं लब्धे लब्धे गमयसि मनो मातरनिशं
न ते स्वार्त्तिस्तस्मान्मम हृदयमेभ्यो विरमय ॥८३॥

कदा भक्तिश्रद्धाभरनमितमूर्द्धा पुलकितो
निमीलन्नेत्राम्बुस्नपितनिखिलाङ्गः स्थिरमनाः ।
तरूणां छायायां विषयरसतृष्णाविरहित-
श्चिदानन्दामाद्यां भगवति भरिष्यामि भवतीम् ॥८४॥
जवारक्तं नक्तन्दिनमनु समानद्युतिधरं
महायोगीन्द्राणां हृदयसरसि स्फूर्जिततमम् ।
नमद्‌गीर्व्वाणानां नयनमधुपस्वादितमहो
कदा पादाम्भोजं तव जननि धास्यामि हृदये ॥८५॥
गृणन् स्तोत्रं पश्यंस्तव परमरूपं प्रतिकृतौ
स्पृशंस्त्वद्‌भक्तानां चरणनलिनं निर्ज्जनगतिः ।
चिदानन्दे पूर्णे महसि घटयन्मानसमिदं
कदा कारुण्यात्ते क्षणमपि च नेष्यामि जननि ॥८६॥
परीवारान्मुक्तं विषयविमुखं शान्तमनसं
पदाम्भोजद्वन्द्वे हृदयनिहिते ध्याननिरतम् ।
सदानन्दं कृत्वा करुणकणया मामगतिकं
भवाम्भोधेः पारं जननि गमयित्री वत कदा ८७॥
वहन्नाज्ञां मूर्द्ध्ना तव विविधदेहेष्वपि वस-
न्नहं दुष्कर्म्माणि त्रिजगति सुकर्म्माणि कृतवान् ।
न तद्भोगे कालो न च तदपि सोढुं मम बलं
ददे तुभ्यं सर्व्वं भगवति गृहाण त्वमधुना ॥८८॥
गृणन्नुच्चैर्नाम द्रुतकनकगौरं तव वपु-
श्चिरं ध्यायन् पश्यंस्त्वयि जगति चैक्यं स्थिरधिया ।

( क्रमशः । )

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.
Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

February, 1945. Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याया-
नन्तकृष्णशास्त्री
सहकारिसम्पादकः—
श्रीजानकीनाथ-
शास्त्री




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

February, 1945. | १८६६-शकीये माघे २७श-वर्षस्य १०म-संख्या | Vol. XXVII, No. 10.

## संस्कृतनाटकानि

( पूर्वानुवृत्तानि )

[ ग्रन्थकर्ता—वि. कृष्ण स्वाम्यय्यङ्गार्यः सुभाषिणीसम्पादकः,
श्रीचामराजेन्द्रसंस्कृतमहापाठशाला, कल्याणपुरी ]

तत्रापि विशेषतः षेक्स्पियरस्य नाटकरित्यभिप्रायो वर्णितः। यदि कारणान्तरैरकस्माद्वा सम्भवतः सादृश्यस्यापि जन्यजनकभावव्यवस्थापकता स्यात्तर्हि कालिदासीयानि नाटकान्यवेक्ष्यैव षेक्स्पियरेण ग्रन्थरचना कृतेति कुतो वा नाङ्गीक्रियेत ? प्रत्यभिज्ञानसाधनानां सादृश्यमपि न सिद्धान्तरक्षणायाऽलम्। रामायण-कथायामेव चूडामण्यादीनामभिज्ञानानां प्रसिद्धत्वात्। रत्नावल्यादीनां

कथानां मूलमपि न परदेशीयमेवेत्याग्रहीतव्यम्। उदयनचरितस्य भासकालेऽप्यतीव प्रसिद्धतया तन्मूलभूतस्य बृहत्कथाग्रन्थस्यैवाधुनाऽनुपलब्ध्या च तत्कालस्य विनिर्णयाभावादस्मद्देशीयत्वस्याऽपि सम्भवात्। 'भासस्तावद्दाक्षिणात्यः, द्राविड़भाषास्वन्यतमायां तमिकभाषायां प्रणीतं, "पेरुङ्गतै" इति ग्रन्थमवलोक्य तस्माद्वत्सराजचरितमुपाददौ। पेरुङ्गतैकालश्च क्रि. श. द्वितीयशतकमिति काऽनुपपत्तिरित्यपि न वाच्यम्। भासस्य देशकालादिविषये निर्णयस्यैवाभावात्तमुपजीव्य विषयान्तरनिर्धारणस्याशक्यत्वात्। रत्नावल्यादिकथानामपि निसर्गतोऽस्मद्देशीयादेव मूलादादानसम्भवे परकीयदेशादुपागतमिति साधयितुमावश्यकानां प्रमाणानामनुपलम्भाच्च 'रोमन्'जनैरन्यैश्च यूरोपीयैर्ग्रीकनाटकानामादर्शमनुसृत्य साहित्यक्षेत्रे प्रगतिस्साधिता। तेषां नाटकेषु स्फुटान्यनुकरणचिह्नान्युपलभ्यन्ते। भारतीयनाटकेषु ग्रीकानुकरणचिह्नस्यैकस्याप्यभावात्स्वतन्त्रतयैव नाटकानामुत्पत्तिरिति वक्तुं युक्तम्। उत्तरोत्तराभिवृद्धिसन्दर्भे ग्रीक्सम्पर्कादस्माकनाटकेष्वपि केचिदप्रधाना व्यत्यासाः सम्भाव्येरन्। परन्तु नाटकानां मूलं भारतीयमेव न परकीयमिति सर्वेऽपि विचारपरा विद्वांसो निष्पक्षपातमङ्गीकुर्वन्ति।

इति नाटकस्वरूपप्रकरणम्

---

मीमांसकानामपि मन्त्रदेवता क्रियानुकूला विधिबोधकारिणी ।
क्रियाविशेषे विनियोगशालिनी क्रमादिपाठैरुपजातसंस्तवा ॥६५॥
ब्रह्मत्वमेवाखिलवस्तुनिष्ठितं प्रपञ्चविश्रान्तिपदं सनातनम् ।
यदीयशक्त्या स्वयमावृतं तथा नभः समीरादि समस्तमुद्गतम् ॥६६॥
यदीयतत्त्वं विदुषां शरीरिणामशेषदोषापगमात प्रसेदुषाम् ।
अनुत्तमानन्दविबोधलक्षणा विमुक्तिरासीदति दुःखवैरिणी ॥६७॥
तवैव रूपं परमात्मशब्दितं सनातनेच्छाकृतिबोधधर्म्मकम् ।
अनन्यसृष्टक्षितिभूधरादिके कार्यें यदीया कृतिरेति हेतुताम् ॥६८॥
महामहिम्नस्तव रूपनिर्णये श्रुतिस्मृतीनामपि वागसत्फला ।
तदेकदेशं विदुषां निरूपणं प्रतारणं देव बुधेन मन्यते ॥६९॥
या या त्वयामानि निजावमानना सा सा मयाध्यायि न बोधपूर्व्विका ।
रुजापरीतो हितवेदनक्षमः कुपथ्यमश्नाति न जातु कामतः ॥७०॥
प्रतिक्षणं श्वाससमीरणस्त्वया प्रवर्त्तितो जीवयते यथैव नः ।
तथैव नित्यं करुणा तवोत्तमा पदे त्वदीये मम मानसं क्रियात ॥७१॥
कलावती मे तनया सभर्त्तृका समातृका चापि विभर्त्तु मङ्गलम् ।
परेश कोपं त्यज दास एष ते नतः पदाम्भोजपरागसन्निधौ ॥७२॥
प्रभो समाज्ञापय मङ्गलं पुरी यथा न शोचामि निजं पुरं गतः ।
यथा च मार्गे भविता न दुस्थितिस्तवैव मे देव दयावलम्बनम् ॥७३॥
नमोऽस्तु ते पादपयोरुहद्वये नमः पदाङ्के पदपांशुके नमः ।
नमोऽस्तु शङ्खे कमले गदायुधे चक्रे तथा तुभ्यमनन्तशक्तये ॥७४॥
नमोऽस्तु नीरे गगने घने वने समीरणे भूमिधरे दिवाकरे ।
सुधाकरे श्यामलवल्लिपल्लवे नमोऽस्तु तुभ्यं विभुमूर्त्तये नमः ॥७५॥
नमो नमः सर्व्वहिताय विष्णवे नमो नमः सृष्टिकृते रजोजुषे ।
नमो नमः संहरणे तमस्विने नमो नमः सर्व्वविदे परात्मने ॥७६॥
क्षमस्व देव प्रथयस्व मङ्गलं त्वया विना को वद दीनबान्धवः ।
त्वदिच्छया सृष्टिपरिस्थितिक्षया जगत्त्रये देववर प्रसीद मे ॥७७॥

सगद्गदं वाचमिमां वदन्नसौ यदापतद्भूमितले स दण्डवत् ।
तदा पुनः शून्यभवा शरीरिणी सरस्वती शान्तपदा समुद्गता ॥७८॥
वणिक्पते प्राक्तनपुण्यसम्पदा तवास्ति लोकोत्तरसम्पदागमः ।
गतोऽधुना त्वं हृदयेऽपि पूततां यतोऽस्ति मे तुष्टिरनिष्टहारिणी ॥७९॥
तरीं स्वकीयां परिपश्य पूर्ववत् बहूपचारां बहुवित्तपूरिताम् ।
न भव्यहानिर्मम विस्मृतिं विना कदापि ते सम्भवितेति दिश्यते ॥८०॥
श्रुत्वा ततो देवसमीरितां गिरं प्रशान्तभीरभ्युदयं विचिन्तयन् ।
तरीं पुरेवाप्तधनां विलोकयन् उपाश्रयन्मोदमहोर्म्मिमालिकाम् ॥८१॥
उल्कासहस्रैरभितः प्रदीपिता मणिप्रभा दीप्ततरीगृहान्तरा ।
मनस्तमोऽप्यस्य वणिक्पतेस्तदा व्यनाशयत् शङ्खपतेश्च सर्व्वतः ॥८२॥
यतो यतः श्यामलपर्णसञ्चयो लता च तव्यामवृतत् क्षणात् पुरा ।
ततस्ततः श्यामलरत्नमालिका पदं प्रचक्रे विविधा तथान्यतः ॥८३॥
जयध्वनिं सत्यपदानुषङ्गिणं जनाः समीरेण विदूरचारिणम् ।
विधाय शैलप्रतिनादवर्द्धितं व्यकम्पयन् श्वापदसङ्घमानसम् ॥८४॥
ते यापयित्वा रजनीं जयारवैः श्रीसत्यनारायणगीतसंस्तवैः ।
घटाम्बुसंस्पर्शजपुण्यवैभवैः कृतार्थतामेव गता महोत्सवैः ॥८५॥
सुधाकरः पुण्यमहोत्सवेक्षिता विभावरीं जागरितस्तदत्यये ।
परं परिम्लान इवापराम्बरे पतत्यसौ निष्प्रभतारकेक्षणः ॥८६॥
प्रभातमुद्वीक्ष्य विहङ्गमावली ततान गीतं स्तुतिपाठकोपमा ।
तद्गीतनादो वणिजां जयध्वनौ प्रसृत्वरः पुष्टिमवर्त्तयद्ध्वनेः ॥८७॥
उल्का गता निष्प्रभतां शनैः शनैः क्रमात् प्रभातद्युतिभिस्तिरस्कृताः ।
उषःश्रिया पूर्व्वदिगङ्गनामुखं जहास पत्युः प्रियसङ्गतिस्मृतेः ॥८८॥
दिनादिकृत्यानि समाप्य सत्वरं चकार यात्रां स वणिक् सबान्धवः ।
मुखेन सत्यस्तुतिवाचमीरयन् तदीयरूपञ्च हृदा विधारयन् ॥८९॥
सत्यस्य पूजाकलसं सहानयद् विशेषकल्याणकरं महोत्सवैः ।
सूरातपेनेव तदीयमान्तरं तमोऽद्य सम्प्राप लयं वणिक्पतेः ॥९०॥

वणिग्वरः शङ्खपतिं चिरप्रियं जगाद वत्स प्रतिमुञ्च भावनाम् ।
व्यतीतमेवाद्य तमो हृदन्तरात सत्यस्मृतिर्येन पुरा विरोधिता ॥९१॥
प्रोवाच देवः स्वयमेव यद् वचस्तदन्यथा केन पथा भविष्यति ।
दग्ध्वा पुनः पूर्ववदादधात पुरं हृत्वा समग्रं पुनरेव सन्ददे ॥९२॥
पदे पदे तस्य विलोकये कृपां स जातु नालं करुणामपोहितुम् ।
कलावती मङ्गलमेव विन्दते श्रीसत्यदेवस्य कृपाविलोकनात् ॥९३॥
यथा तथा वास्तु न वस्तु भावये महान् व्यतीतः समयः किलावयोः ।
प्रवासमासाद्य निजैर्वियुक्तयोस्ततः समुत्कण्ठत एव मानसम् ॥९४॥
ततो विलम्बेन विना यथा तरी स्वदेशमायाति तथा विधीयताम् ।
कलावतीं प्राणसमां विलोकितुं मनस्त्वरामेव समीक्षते गुणम् ॥९५॥
यदा पुरा वह्निशिखाभिरुद्धतं पुरी विदग्धा मम भस्मतां गता ।
तदा क्व वा मातृयुता प्रिया सुता कलावती मे शरणं समासदत् ॥९६॥
विनष्टसर्वस्वतया तदा पुनः स्वजीविकार्थं कियदप्यखिद्यत ।
कियन्न दैवं विनिनिन्द तावता कियन्नवास्मान परुषं जगाद सा ॥९७॥
वृथैव तेषां श्वसितं दुरात्मनां येषु श्वसत्स्वेव तदीयबान्धवाः ।
भिक्षां चरन्तः परकीयकेतने दुरुक्तिलाभाल्लघयन्ति बान्धवान् ॥९८॥
निरर्थको मे धनरत्नसञ्चयी यदेवमादौ दयिता सुता तथा ।
अशेषकष्टानि धनेन वञ्चिता समाश्रिता तेन न मोदमाश्रये ॥९९॥
अलं व्यतीतस्मरणेन वाधुना यतः स सर्वं विदधे परेश्वरः ।
स एव नूनं कुशलस्य देशकस्तदा तदा तत्कुशलं व्यसाधयत् ॥१००॥

एवं संवदतोस्तयोररुणिता प्राची गता शुभ्रतां
स्निग्धा काननवल्लरी प्रियनिशानाशेन शोकाकुला ।
नीहाराश्रु मुमोच पत्त्रिनिकरध्वानैः प्रभातोदये
योक्त्रान्मुक्तिमवाप वाणिजतरी दूराय देशाध्वने ॥१०१॥

इति श्रीसत्यानुभावे महाकाव्ये सत्यसंवादो
नाम द्वाविंशः सर्गः ॥२२॥

## त्रयोविंशः सर्गः

योक्त्रान्मुक्ताः क्षेपणीपातयुक्तास्तीराद्दूरं नाविकैर्नीयमानाः ।
तर्य्यः शौर्य्यं मारुतस्यानुकूलं लब्ध्वा वेगैः सम्प्रवृत्ताः प्रयातुम् ॥१॥
प्रातः सूरः स्वीयहस्तेन नीरं रक्तेनासौ नूनमालोड्य तस्मिन् ।
छायाकायः स्नाति पूर्व्वप्रदोषे यातोऽधस्तात् पातकं स्वं विपश्यन् ॥२॥
हत्वा ध्वान्तं शोणितैः किन्नु रक्तं हस्तं कर्त्तुं क्षालनात् पूतरूपम् ।
प्राप्तः प्रातः पुण्यतोयं तटिन्याः शीघ्रं सूरः क्षीणपादो विदूरात् ॥३॥
योग्यां पत्नीं मन्यमानः सुवर्णां छायानाम्नीं स्वीयजायां सरोषाम् ।
यावद्दूरं याति सूरोऽनुनेतुं तावद्दूरं सेर्ष्यया सम्प्रयाति ॥४॥
सूर्य्यः कान्तां पद्मिनीं सुप्तिभाजां हस्तस्पर्शैः प्रापयन् स प्रबोधम् ।
निद्राक्रान्त्या स्वेदनीहारभारं हारं हारं प्रेमकृत्यं वृणीते ॥५॥
सर्व्वां रात्रिं भानुविच्छेददीना सुप्तौ मग्नेत्येव सौभाग्यमस्याः ।
शोके प्राप्ते मूर्च्छया निद्रया वा लुप्ते बोधे नैव दुःखानुभूतिः ॥६॥
साध्वीवृत्तिं धारयन्ती प्रभाते हृष्यद्गन्धा पद्मिनी गन्धलुब्धम् ।
भृङ्गं वातस्पन्दिता सञ्चरन्तं वारं वारं वारयत्युज्ज्वलन्ती ॥७॥
गन्धो यावत् फुल्लसौगन्धिकानां वातारूढः सर्व्वतः सम्प्रसृतः ।
तावत्तेषां सन्निधिस्था द्विरेफा गन्धापाये प्रातरन्यत्र यान्ति ॥८॥
यावत् स्वार्थं स्वार्थमग्नाः सकृत्याः स्वार्थप्राप्तौ यावदाशां त्यजन्ति ।
तावद्दूरं निर्व्यपेक्षा व्रजन्ति को वा स्वार्थं हातुमीष्टे सकामः ॥९॥

मृदुकरमपि साध्वी पद्मिनी कौमुदीनां
पतिमपि कुमुदानां वीक्षते नानुरक्ता ।
खरकरमपि-भानुं प्राणकान्तं निशान्ते
स्मितसुभगमुखीयं सादरं सम्प्रपन्ना ॥१०॥

चक्रवाकदयिता निजनाथं सोऽपि तां भजति न स्म निशायाम् ।
प्रातरत्र नियतेः कृपया तौ सङ्गतौ लघु मिथः प्रियलोभात् ॥११॥

# संस्कृत-साहित्य-परिषद:

## १३५१-५२ वङ्गाब्दीयकार्यनिर्वाहक-समितिः

सभापतिः—१। महामहोपाध्याय-श्रीयुक्त दुर्गाचरण सांख्य-वेदान्ततीर्थः।

सहकारि सभापतयः—२। महामहोपाध्याय-श्रीयुक्त अनन्तकृष्ण शास्त्री, ३। महामहोपाध्याय-श्रीयुक्त सीताराम शास्त्री, ४। महामहोपाध्याय-श्रीयुक्त योगेन्द्रनाथ वेदान्ततीर्थः, ५। महामहोपाध्याय-श्रीयुक्त कालीपदतर्काचार्यः, ६। पण्डित-श्रीयुक्त द्वारिकानाथ न्यायशास्त्री, ७। पण्डित-श्रीयुक्त सीतानाथ सिद्धान्तवागीशः, ८। पण्डित-श्रीयुक्त तारानाथ न्याय-तर्कतीर्थः, ९। डक्टर श्रीयुक्त उपेन्द्रनाथ घोषालः एम. ए., पि-एइच. डि., १०। पण्डित-श्रीयुक्त जानकीनाथ शास्त्री, ११। श्रीयुक्त वसन्तकुमार चट्टोपाध्यायः, एम. ए.। सम्पादकौ—१२। श्रीयुक्त अमरेश्वर ठाकुरः, एम. ए., पि-एइच. डि. १३। श्रीयुक्त चपलाकान्त भट्टाचार्यः, एम. ए, वि. एल.। सहकारिसम्पादकाः—१४। श्रीयुक्त दीनबन्धु साहित्यशास्त्री, १५। श्रीयुक्त रामकृष्ण चक्रवर्ती, एम. ए., १६। श्रीयुक्त अशोकनाथ भट्टाचार्यः, वेदान्ततीर्थः एम. ए., पि. आर. एस., १७। श्रीयुक्त विष्णुपद भट्टाचार्यः काव्यतीर्थः, एम. ए. १८। श्रीयुक्त देवेन्द्रचन्द्र गुप्तः, एम. ए., १९। श्रीयुक्त गौरीनाथ भट्टाचार्यः, एम. ए, पि. आर. एस., २०। श्रीयुक्त सरोजेन्द्रनाथ भञ्जः, काव्य-पुराणतीर्थः, एम, ए., २१। श्रीयुक्त विजलीमोहन मुखोपाध्यायः, एम. ए., वि.एल,

अन्ये सदस्याः—१। श्रीयुक्त कालीपद विद्याभूषणः, व्याकरणतीर्थः, २। श्रीयुक्त गणपति सरकारः, विद्यारत्नज्योतिर्भूषणः, ३। श्रीयुक्त जगन्मोहन ज्योतिर्विनोदः, ४। श्रीयुक्त त्रिदिवनाथ रायः, एम. ए., वि. एल., ५। श्रीयुक्त दुर्गामोहन भट्टाचार्यः, काव्य-सांख्य-पुराणतीर्थः, एम. ए., ६। श्रीयुक्त प्रबोधचन्द्र चट्टोपाध्यायः, एम. ए., वि. एल., ७। कविराज-श्रीयुक्त मनोरञ्जन सांख्य-वेदान्त-तीर्थः, ८। श्रीयुक्त योगेन्द्रमोहन विद्यारत्नः, ९। श्रीयुक्त रामधन काव्य-व्याकरण-पुराणतीर्थः, १०। श्रीयुक्त वामाचरण काव्यतीर्थः, ११। श्रीयुक्त वामापद विद्यारत्नः, १२। भिषकूशिरोमणि-श्रीयुक्त विमलानन्द तर्कतीर्थः, १३। डाः श्रीयुक्त भूपेन्द्रनाथ वसुजः, एम. वि., १४। श्रीयुक्त देवेन्द्रनाथमुखोपाध्यायः, एम. ए., वि. एल., १५। श्रीयुक्त चण्डीचरण तकतीर्थः, १६। श्रीयुक्तचिन्ताहरणचक्रवर्ती, काव्यतीर्थः, एम. ए., १७। श्रीयुक्त कृष्णगोपाल गोस्वामी, शास्त्री स्मृतिमीमांसातीर्थः, एम. ए., पि. आर. एस., १८। कविराज-श्रीयुक्त भवेशचन्द्र सेनगुप्तः, काव्यतीर्थः, १९। ब्रह्मचारी सदानन्दः, २०। श्रीयुक्त सत्येन्द्रनाथ सेनः, एम. ए., २१। श्रीयुक्त अक्षयकुमार मित्रः, २२। श्रीयुक्त प्रकाशचन्द्र वन्द्योपाध्यायः, वि. ए., २३। श्रीयुक्त कार्तिकचन्द्र चक्रवर्ती, २४। श्रीयुक्त हेमन्तकुमार तर्कतीर्थः, २५। श्रीयुक्त रामधनस्मृतितीर्थः, २६। श्रीयुक्त प्रमथनाथसरकारः, एम. ए., २७। श्रीयुक्त उपेन्द्रमोहन सांख्यतीर्थः।

१३५१-५२ वङ्गाब्दीय-विभागीय-कर्मपरिचालकाः

पत्रिका-सम्पादकः—महामहोपाध्याय-श्रीयुक्त अनन्तकृष्ण शास्त्री। पत्रिका-सहकारि-सम्पादकः—श्रीयुक्त जानकीनाथ शास्त्री। ग्रन्थागारिकौ—श्रीयुक्त जानकीनाथ शास्त्री, श्रीयुक्त दीनबन्धु साहित्यशास्त्री। सहकारि-ग्रन्थागारिकौ—श्रीयुक्त विष्णुपद भट्टाचार्यः, काव्यतीर्थः, एम. ए., श्रीयुक्त सरोजेन्द्रनाथ भञ्जः, काव्य-पुराणतीर्थः, एम. ए.। आचार्यः—श्रीयुक्त सीतानाथ सिद्धान्तवागीशः। सहकारी अध्यापकः—श्रीयुक्त रामधन काव्य-व्याकरण-पुराणतीर्थः। नाट्य-सम्पादकः—श्रीयुक्त जगन्मोहन ज्योतिर्विनोदः। सहकारि-नाट्य-सम्पादकौ—श्रीयुक्त कार्तिकचन्द्र चक्रवर्ती, श्रीयुक्त विजलीमोहन मुखोपाध्यायः, एम. ए., वि. एल.। सङ्गीतशिक्षकौ—श्रीयुक्त देवेन्द्रचन्द्रगुप्तः, एम.ए, श्रीयुक्त मणिलाल वन्द्योपाध्यायः। आय-व्यय-लिपिरक्षकः—श्रीयुक्त विजलीमोहन मुखोपाध्यायः, एम. ए., वि. एल.। कोषाध्यक्षः श्रीयुक्त अशोकनाथ भट्टाचार्यः, एम. ए., पि. आर. एस., वेदान्ततीर्थः। आय-व्यय-लिपिपरीक्षकौ—श्रीयुक्त जनार्दनचन्द्र चक्रवर्ती, बि. कम., जि. डि. ए., आर. ए., श्रीयुक्त अनिलकुमार मुखोपाध्यायः, एम. एस-सि.।

१३५१-५२ वङ्गाब्दीयोपदेशक-समितिः

सभापतिः—सार श्रीयुक्त नृपेन्द्रनाथ सरकारः, के. सि. एस. आइ.

अन्ये सदस्याः—१। श्रीयुक्त अनन्तचरण भट्टाचार्यः, २। श्रीयुक्त आदित्यनाथ मुखोपाध्यायः, एम. ए., पि-एइच. डि., ३। रायबाहादुर श्रीयुक्त गोविन्दलाल वन्द्योपाध्यायः, कविरत्नः, वि. ए., ४। श्रीयुक्त जगदीशचन्द्र वेदव्यासः, ५। श्रीयुक्त दक्षिणाचरण भट्टाचार्यः, ६। श्रीयुक्त दामोदरदास खान्ना, ७। महाराजश्रीयुक्त भूपेन्द्रचन्द्र सिंहः, वि. ए, (सुसङ्ग), ८। राजा श्रीयुक्त भूपेन्द्रनारायण सिंह वाहादुरः, एम. एल. सि. (नसीपुर), ९। श्रीयुक्त यतीन्द्रनाथ वसुजः, एम. ए., एस., एल.ए., १०। श्रीयुक्त यतीन्द्रविमल चतुर्धुरीणः, पि-एइच. डि., ११। श्रीयुक्त रमाप्रसाद मुखोपाध्यायः, एम. ए., वि. एल., १२। श्रीयुक्त वैजनाथ वाजोरिया, एम. एल. ए. (सेण्ट्राल), १३। श्रीयुक्त ब्रजेन्द्रकिशोर भट्टाचार्यः, १४। महामहोपाध्याय श्रीयुक्त शकलनारायण शास्त्री, १५। कुमार श्रीयुक्त शरदिन्दुनारायण रायः, प्राज्ञः, एम. ए., १६। श्रीयुक्त शैलेन्द्रनाथ मित्रः, एम, ए., १७। श्रीयुक्त श्यामाचरण काव्य-व्याकरणतीर्थः, १८। श्रीयुक्त सतीशचन्द्र घोषजः, एम. ए., १९। श्रीयुक्त सातकड़ि मुखोपाध्यायः, एम, ए., पि-एइच. डि., २०। श्रीयुक्त सुनीतिकुमार चट्टोपाध्यायः, एम. ए. डि. लिट., २१। श्रीयुक्त नरेन्द्रनाथ शास्त्री, २२। श्रीयुक्त प्रबोधचन्द्र मुखोपाध्यायः, एम. ए.।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17. R. G. Kar Road, Calcutta.

April, 1945. Reg. No. C. 1073


सम्पादकः—
महामहोपाध्याया-
नन्तकृष्णशास्त्री
सहकारिसम्पादकः—
श्रीजानकीनाथ-
शास्त्री




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

April, 1945. | १८६६-शकीये चैत्रे | २७श-वर्षस्य १२श-संख्या | Vol. XXVII No. 12.

## काव्यसौन्दर्य्यम्

[ निबन्धकः—श्रीसरोजेन्द्रनाथभञ्जः, काव्यपुराणतीर्थः, साहित्यशास्त्री एम.ए ]

अथ काव्यं किञ्चिदपि यद्यसुन्दरं न तत्र सहृदयानां शुश्रूषा, सत्यां वा तस्यां चमत्कारालाभस्तदलाभे च काव्यपदवाच्यानर्हता । अत्र चासुन्दर-मिति न गुणीभूतव्यङ्ग्यम् । सौन्दर्य्यपदेन च काव्यस्य किमपि रामणीयकं लोकोत्तरचमत्कारो वा गृह्यते । सौन्दर्य्यं च प्रतिभामात्रोत्पादनीयं यद् विना सहृदयमानसतोषणाय कथञ्चिदपि न काव्यं कल्पते । 'येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवन-योग्यता ते हृदयसंवादभाजः सहृदयाः' इत्यभिनवगुप्ता मन्यन्ते ।

न च काव्यं यदश्लीलं तदसुन्दरमिति वक्तुं शक्यते। तथाहि कुमारसम्भवे पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनम् 'इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचित'मिति प्राचीनमतमनुसृत्य विश्वनाथादिभिः संदूषितम्। परन्तु तदेव देवीसम्भोगवर्णनम् आनन्दवर्द्धनाचार्य्यैः रसदृष्ट्या समर्थितम्। उक्तञ्च तैरेव—'द्विविधो हि दोषः—कवेरव्युत्पत्तिकृतोऽशक्तिकृतश्च। तत्राव्युत्पत्तिकृतो दोषः शक्तितिरस्कृतत्वात् कदाचिन्न लक्ष्यते। यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते। परिकरश्लोकश्चात्र—

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते॥

तथाहि— महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतं ग्राम्यत्वेन न प्रतिभासते। यथा कुमारसम्भवे देवीसम्भोगवर्णनम्। शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते। तथाहि शक्तिरहितेन कविना एवंविधः शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते इति। एतच्च समर्थितमभिनवगुप्तैरपि— 'सम्भोगोऽपि ह्यसौ वर्णितस्तथा प्रतिभानवता कविना, यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्य्यपरामर्शं कर्त्तुं न ददाति। यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्य्यते न तु पौर्वापर्य्यपरामर्शे तथात्रापीति भावः' इति।

रसेषु शृङ्गार एव काव्यसौन्दर्य्यं वर्द्धयति। उक्तं हि—'शृङ्गार एव परमो मनःप्रह्लादनो रसः' इति। दृश्यते च समस्त-वास्तव्यानां महाकवीनां शृङ्गारवर्णने ग्रहिलता। शृङ्गारो हि आब्रह्मकीटपर्य्यन्तं प्रसरति। न हि करुणः सकलसहृदयेभ्यः स्वदते। केचन शान्तेऽभिरमन्ते अपरे च वीरपक्षपातिनः। एवञ्च शाकुन्तलादीनामिव मुद्राराक्षसादीनां न सहृदयसाधारणभोग्यता। ननु यदि कोऽप्येवं ब्रूयात्—रसेषु यदि शृङ्गार एव काव्यलक्ष्मीं तनोति किमपरेषां रसानां वैयर्थ्यं करुणरसप्रधानस्य उत्तरचरितादेः किमकाव्यत्वापत्तिर्वा। तत्र वयं ब्रूमहे—पुटपाकप्रतीकाशः करुणो रसो नित-

रामस्माकं चेतो विलोड़यति, दुःखबहुला वयं काव्येष्वपि दुःखानि नाभिनन्दामः। यद्यपि करुणादिरसे अस्त्येव सुखानुभवः सम्भोगे दन्तक्षतादिवत्, तथापि शृङ्गार इव न करुणः काव्यचमत्कारमापादयितुमलम्। चमत्कारश्च अनुभवसाक्षिको जातिविशेषः। अयमेव सौन्दर्य्यपदेन बोध्यते। अत एव कालिदासेन सत्यप्यवसरे न शाकुन्तलं वियोगान्तं कृतम्। स्मरत तावद् यदि पञ्चमाङ्कान्ते शकुन्तलान्तर्धानानन्तरं राज्ञोऽङ्गुरीयप्राप्तिर्नाटकसमाप्तिश्च स्यात् तर्हि किं तत् शाकुन्तलमतीव सुन्दरं भवेत्। एवमेतदुक्तं भवति यत् काव्यसौन्दर्य्यानुरोधेनैव कालिदासेन शाकुन्तलं न वियोगान्तं कृतम्। अपरं तावद् दृश्यतां कालिदासस्य वैशिष्ट्यम्—यत् करुणेऽपि मितभाषी वै कालिदासः। न हि स भवभूतिरिव चेतोविक्लवकरं कारुण्यं तनोति। अयमेव रसपरचेतसः काव्यसौन्दर्य्यवेदिनो महाकवेः स्वभावः। एवञ्च शक्तिहीनानां कवीनां शृङ्गारवर्णनं सौन्दर्य्यरहितत्वादश्लीलमेव स्यादिति वयमपि वदामः। अत एव काव्यकरणे प्रतिभैव हेतुरिति पण्डितराजो जगन्नाथो जगाद। अशक्तिकृतदोषः कविना परिहार्य्य इति प्रागेवोक्तम्। श्लोकश्चात्र यायावरीयाणाम्—

'नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः।
स नन्दति विना वाच्यं यो जानाति निगूहितुम्॥'

ध्वनिप्रधानं काव्यं सुन्दरमिति सर्वसम्मतम्। अत एव ध्वनिस्थापनं विस्तरशो नास्माभिः क्रियते। वाच्यार्थ एव काव्यसौन्दर्य्यं सम्भवति इति कुन्तको बभ्राम। न क्षुण्णो हि तेन ध्वनिमार्गः। तथापि कविप्रतिभैव वाच्यार्थे वैचित्र्यं जनयति, वैचित्र्यं च काव्यप्राणा इति तेनापि प्रतिपादितम्। जरन्नैयायिकान् प्रति जयन्तभट्ट एवमाह—'वस्तुतस्तु तार्किकाणामभूमिरयं नय' इति। इत्येवं सन्ति बहुशो ध्वनिप्रशंसा। काव्यसौन्दर्य्यविषये अपरं चेदमस्ति। प्रायशो हि कवयो महाकाव्येषु नृपपुरादिवर्णने तथा नाटके चरित्राङ्कणे यथायथं वास्तवानुकरणं कुर्वन्ति।

तथाहि यदि नायिका मर्त्यैवाङ्किता भवति कुत्र तस्या आलम्बनता लोकोत्तरता वा ? कथं वा मर्त्यसुन्दरीभावनयैव विश्रान्तचित्तानां सहृदयानां तत्तन्नाटकादिषु पाठाग्रहो भवेत ? एवं तर्हि लतोद्भवं पुष्पं यथा लताविलक्षणं भवति तद्वत काव्येऽपि वर्णनादीनां लोकोत्तरत्वं साध्यम्। एतदेव स्वभावोक्त्यलङ्कारस्य बीजम्। महाकवयो हि प्राकृतं वर्णयन्तोऽपि अप्राकृतमेव वर्णयन्ति। न तत्र यत्नशङ्का कार्य्या, प्रतिभैव केवलं हेतुः। उक्तञ्च अभिनवगुप्तैः—'आस्वादयितॄणां हि यत्र चमत्काराविघातस्तदेव रससर्वस्वं स्वादायत्तत्वा'दिति। आनन्दवर्द्धनाचार्य्या अप्याहुः—'यदा कविरपगतरसभावो वक्ता तदा रचनायाः कामचारः' इति।

एतानि सौन्दर्य्यविषये यान्युक्तानि तानि तु सम्प्रति आधुनिकसूरिवर्य्यैर्बहुशः समालोचितानि, केवलं तेषां तत्तदुक्तीनां संस्कृतालंकारशास्त्रानुगतत्वं दर्शयितुमेवायमस्माकं प्रयास इति शम्।

---

## वार्षिक-साधाराण-सभा

**संस्कृत-साहित्य-परिषद आगामिनी वार्षिक-साधारण-सभा १३५२ वङ्गाब्दीय-सौरवशाखस्य (१६श) षोड़श-दिवसे रविवारे सायं पञ्चवादनतो भविष्यतीति तत्र परिषत्-सभ्यानां समुपस्थितिः प्रार्थनीया।**

आलोच्य-विषयाः—

१। १३५१ वङ्गाब्दीय कार्य्यविवरणस्य तथा आय-व्यय-लिपि-परीक्षक-परीक्षित-१३५१ वङ्गाब्दीयायव्यय-लिपेरनुमोदनम्।

२। आगामिवर्षीय-कार्यनिर्वाहक-समिति-सदस्यानां विभागीय-कर्म-परिचालकानाञ्च निरूपणम्।

३। आगामिवर्षीयोपदेशकसमिति-सदस्य-निरूपणम्।

४। विविधाः।

( षोड़शदलपद्मबन्धप्रकारभेदः )

वारि पङ्कजिनीसेवा-वासितं ललितं दिवा ।
वामाक्षी कामिनी का वा वाञ्छां नैति रतो नवा ॥४४॥
वायुना विकसत्साबा बाधिता का लता न वा ।
बाधते न मनः को वा वाचालः कोकिलो युवा ॥४५॥
वानीरकुञ्जं सद्भावा बाला सप्रणयासवा ।
वामा प्राप्तप्रियाभावा बाष्पं कापि श्रिताथवा ॥४६॥
वापी हंसकुलैः का वा वाससा नात्तसंस्तवा ।
वासं हित्वा बहिःसेवावासना चित्तसम्भवा ॥४७॥

( षोड़शदलः, 'मा रमा' वत् पद्मबन्धः )

नाङ्गलास्यधना माननमाना का लताधुना ।
नाधुता वायुना सावबसाना सप्रसादना ॥४८॥
नादसारवनागारा रागानायक्रमा सना ।
नासमा मधुना दीप्ताप्तादीना कोकिलाङ्गना ॥४९॥

( 'वारिपङ्कजिनी'वत् पद्मबन्धः )

नानाभङ्गीभृतध्वाना नायिका मानसाध्वना ।
नाटयन्ति रसाधीना नालयः केन वा सना ॥५०॥
नास्ते वापो तदा दीना नाम्बुजा या न शोभना ।
नाम्बुजाली न वा लीना नासन्नमधुपस्वना ॥५१॥
नायकासादितध्याना नायिका रहितात्मना ।
नापन्नकुसुमोद्याना नादभीत्या सुलोचना ॥५२॥
नाबाधं रन्तुमीशाना नागरेण प्रवासिना ।
नापारं सुखमिद्धेना न जहाति सवेदना ॥५३॥

श्रीरायाता वल्लरीपुष्परागङ्गेयासङ्गं भृङ्गसङ्घो विवेश ।
देशे देशे माधवो रम्यभाव-शब्दं देवी शास्ति माधुर्यधर्मा ॥५४॥

कामः कामं सर्वतो भ्रान्तिशाली पक्षं दक्षं यावदभ्यासमाद् ।
सुप्रापार्थस्तावदेष प्रतीतः शुद्धप्रेम्णः सङ्गतेरेष लाभः ॥५५॥

हृतं जड़त्वं बहुविघ्नकारि दार्ढ्येन देही न दधाति वासः ।
कम्पार्हनं नश्यति नीरभावि पिकः स्वरं पञ्चममेति गाता ॥५६॥

राकेक्षणाद् विरहिणी श्रितचित्तबाधा
लज्जापिता प्रियसखी परिवृत्तलक्ष्मीः ।
क स्वान्तरं गमितवत्यसि दीप्रभावा
या पूर्वतो विकृतिमेषि पराभिभूता ॥५७॥

सुरम्यचूतप्रसवाङ्कुराशी लास्येन गीतस्य पिको वयस्याः ।
पन्थानमानाय्य हृदा विषादे स्थितिं तदीयां तनुते सुगाता ॥५८॥

वियोगिनो पुष्पवती सकामा
वियोगिनी पुष्पवती सकामा ।
विलासिनी विस्मरति स्म जाड्यं
विलासिनी विस्मरति स्म जाड्यम् ॥५९॥

भोगी नवं मालयवायुमीहते भोगी नवं मालयवायुमीहते ।
मुग्धा प्रिया नायकरत्नमीहते, मुग्धाप्रियानायकरत्नमीहते ॥६०॥

सुरभौ सुरभौ सुरभोग्यसमं मधुपो मधुपो मधु पीतचरम् ।
तनुते तनुतेततनौ विरहात् कमलं कमलं समलङ्कुरुते ॥६१॥

विभाति गन्धः प्रियसारसानां विभाति गन्धः प्रियसारसानाम् ।
विभाति गन्धः प्रियसारसानां विभाति गन्धः प्रियसारसानाम् ॥६२॥

प्रियाहितं कामयते सुनर्मा प्रिया हि तं कामयते सुनर्मा ।
प्रियाहितं कामयतेऽसुनर्मा प्रिया हि तं कामयतेऽसुनर्मा ॥६३॥

Vol. XXVII ] 1944-45

२७श वर्षस्य १८६६ शकाब्दस्य

# संस्कृत-साहित्य-परिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीजानकीनाथ-शास्त्री

संस्कृत-साहित्य-परिषत्,
श्यामवाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

# १८६६ शकाब्दीय-संस्कृत-साहित्य-परिषत्-पत्रिकास्थ-विषय-सूची

( वर्णक्रमानुसारिणी )


| निबन्धनाम | निबन्धकनाम | पृष्ठम् |
|---|---|---|
| उपनिषत्प्रामाण्यचर्चा— | मः मः अनन्तकृष्ण-शास्त्री | ३, २५ |
| काव्यसौन्दर्यम्— | श्रीसरोजेन्द्रनाथ भञ्ज-काव्यपुराणतीर्थः एम-ए | ८१ |
| किञ्चित् प्राप्तकालम्— | श्रीजानकीनाथ-शास्त्री | ८० |
| 'चउद्धार' ग्रामसंघटनकेन्द्रम्— | श्रीलक्ष्मीनारायण साहु एम-ए | ६ |
| छात्रजीवनम्— | श्रीवाणीराणी सिंहः | १६ |
| जैनदर्शने सांख्यादिदर्शन-साम्यम्— | श्रीआशुतोष न्यायाचार्यः | १२, २८ |
| देवीशतकम्— | कृष्णनाथ सार्वभौमः सम्पादकः श्रीजानकीनाथ शास्त्री | ५३, ६५, ४२ |
| 'देवीशतकस्य' अवतरणिका | ,, | ७७ |
| नववर्षम्— | श्रीविधुभूषण न्यायतर्कतीर्थः | १ |
| परिषदः कार्यनिर्वाहक-समितिः— | | ७५ |
| ,, वार्षिकायव्ययनिष्कर्षः— | | ५१ |
| प्रमथनाथस्मृतिः— | मः मः श्रीकालीपदतर्काचार्यः | ४१ |
| बुद्धवर्षविमर्शः— | सैंहलेयः श्रीधर्मपाल स्थविरः | ४ |
| शोकवार्त्ता— | | ८० |
| श्रीरामकृष्णोदारकथाप्रसङ्गः— | स्वामी जगन्नाथानन्दः | २१, ३३ |
| संस्कृतनाटकानि— | वि, कृष्णस्वाम्यय्यङ्गार्यः | ७,१३.१७,३६,४५,४६,७३ |
| सत्यानुभावम्— | मः मः श्रीकालीपदतर्काचार्यः | १६५,१६६,२०३ |



संस्कृत-साहित्य-परिषत्, श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17. R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXVIII. May, 1945

No. 1. १८६७-शकीये

२८श-वर्षस्य वैशाखे

१म-संख्या मासे




इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

प्रौढो भाति वसन्तः
कूजति झिल्ली पुष्पितवल्ली-
मधुरः पल्लीप्रान्तः
फलति रसालः कान्तः ।
वृद्धो भवति वसन्तः
परभृतनादो लसदवसादो
दिवसो मोदकशान्तः ।
प्रवहति पवनो दान्तः ।
मर्त्ये मिलति भवानी
पार्श्वे विमला वाणी कमला
शक्तिधरः शरपाणिः
गणपतिरपि कृपमानी ।

दुर्गतभारतवर्षं
तत्पदकृपया चिरमुपचितया
मुञ्चतु दुःखविमर्शं
विन्दतु निर्मलहर्षम् ।

---

# मतिमञ्जरी

नववर्षनिवेदनम् ।—मान्या वाचकमहाभागा ! व्यतीतस्तावन् सम्पराय-परम्पराप्रभवविपर्यासपर्याकुलः संवत्सरः स्मरणीयतामुपगतोऽपि दुःखाकरोति नितरामस्माकमन्तःकरणानि । अद्य खलु विजयलक्ष्मी-जनितक्षणा विलक्षणा समुपलक्ष्यते सौभाग्यलक्ष्मीरचिरप्रवृत्तस्य नववर्षस्य, येन सर्वत्रैव स्वास्थ्यसम्भावनया स्वस्तिमतीव संवृत्ता पृथ्वी । करुणाकरः परमेश्वरः करुणाप्रचारेण तामिमां सम्भावनामविसंवादिनीं विदध्यादिति सभक्तिकप्रणतिसहस्रैरभ्यर्थयामहे ।

अष्टाविंशतितमीयं वर्षवृद्धिरस्याः श्रीमद्भिः सुचिरमनुगृहीतायाः संस्कृत-पत्रिकायाः । तस्याञ्च वर्षवृद्धौ परिषत्परिचालकपरिषदा तत्सम्पादनकृत्ये विनियुक्ता वयं यथाशक्ति तामिमां द्वारीकृत्य श्रीमतां सेवायामात्मानं प्रवर्त्तयामः, समाशास्महे च यथा सेयं सतां प्रणयपात्री गीर्वाणवाणीपत्री प्रतिपदं भवतां प्रसादसम्पदं समासाद्य नातिचिरादेव देवकृपया प्रचितोप-करणा रणादिप्रभवं दुःखपरिभवं निःशेषं जह्यादिति । पत्रिकाया जीवातुः किल वित्तञ्च निबन्धश्च ; ययोरेकतरस्य विरहे सेयमात्मनैव रहिता खेदय-त्यन्तःकरणं स्वीयबान्धवानाम् । तद् यथा धनिका एतस्या आत्मसंरक्षणो-पयुक्त-वित्तनिष्पादनेन तथैव कोविदा विदां सन्तोषकरेण निबन्धनिकरेण समं यद्येनामुपकुर्युस्तदैवास्या दैवोपनतविपत्तिप्रतीकारः शक्यः सम्भाव-यितुमिति श्रीमतामन्ते प्रथमतो यथासम्भवं सप्रणामं सपरिष्वङ्गं सस्नेहञ्च विनिवेद्य विरमामः ।

---

# ग्रन्थसमालोचनम्

न्यायमञ्जरी ।—न्यायशास्त्रीयग्रन्थेषु रत्नभूता न्यायमञ्जरी न केषां सुविदिता न्यायविद्यासु सुनिष्णातानाम् । कालेनाद्य संस्कृतविद्याया विशेषतो न्यायतत्त्वविद्यायाः प्राचीनकालानुरूपप्रभावविपर्ययेण दुष्करस्तत्त्वावबोध इति तत्त्वबुभुत्सूनां विशेषबोधसम्पदः सम्पादनाय पण्डितप्रकाण्डैः श्रीयुक्त-पञ्चाननतर्कवागीशमहोदयैः स्वकृत-वङ्गभाषामयविस्तृतानुवादविवरणादि-समन्वितं तदीयमेकं संस्करणं कलिकाताविश्वविद्यालयानुकूल्येन प्रकाशित-मुपलब्धमस्माभिः । अस्मिन् संस्करणे तर्कवागीशमहाभागैरादौ न्याय-मञ्जर्याः प्रकरणविशेषविभागेन मूलं, तदनु वङ्गभाषामयमनुवादं, यथा-पेक्षितञ्च गूढार्थविवरणमयं टिप्पनीसमन्वयं, संस्कृतभाषामयीं पादटीकां च सन्निवेश्य महानुपयोगः संसाधितः संस्करणस्यास्य तत्त्वविबोधनव्यापा-रेषु । महतीयं विज्ञानस्य प्रतिष्ठा यत् स्वयमवधारितस्य शास्त्रार्थस्य संस्कृतभाषामविदुषामपि बोधसौकर्याय भाषान्तरेण सम्प्रकाशनं नाम । तर्कवागीशमहोदयाः सर्वतः सुदुर्गमस्यास्य न्यायदर्शनग्रन्थस्य तथा नैपुण्येन अनुवादविवरणादिकमुपनिबद्धवन्तो येन तदालोचनविस्मितानां पण्डितानां स्वत एव समावर्जितानि भवन्ति चेतांसि । अस्य ग्रन्थरत्नस्य भूरिप्रचार-कामनया सममाशास्महे यत् अस्या न्यायमञ्जर्या ईदृशेन परिकरेण भाग-विशेषं प्रकाश्यैव श्रीमन्तः सन्तोषसीमां नाधिकुर्युः, परमचिरमेवांशान्तर-प्रचारमपि प्रशस्ततररीत्या सम्पाद्य जगति न्यायविद्याया अभिवृद्धिञ्च स्वीयपण्डितकुलोचितख्यातिञ्च जगतो महान्तमुपकारञ्च नितरामनुकूल-येयुरिति शम् ।

---

# वृत्तवर्तिका

परिषदो वार्षिकमहोत्सवः ।—विदितमस्तु प्रियपाठकमहाभागानां यद् व्यतीते वैशाखमासस्य चतुर्विंशदिवसे सोमवासरे सायं षड्वादनतः प्रारभ्य कलिकातास्थ-'रङ् महल'-नामधेय-साधारणरङ्गमञ्चे संस्कृत-

साहित्य-परिषद् एकोनत्रिंशवार्षिकमहोत्सवस्तत्रभवतां विचारपतीनां श्रीयुक्तविजनकुमारमुखोपाध्यायमहोदयानामाध्यक्ष्येण सुसम्पन्नः समजनि। महोत्सवसभायामनेके मान्यमान्याः पण्डितप्रकाण्डाः संस्कृतविद्यारसिका धनिकाः परे परिषदनुग्राहकाश्च स्वोपस्थानेन तत्रत्यकृत्यजातं सफलमकुर्वन्। ईदृशे दुष्कालेऽपि संस्कृतविद्यायां सामाजिकानाममीषामसीमानुरागः सुतरामस्या अमरभूयं काले पुनरुपचयञ्च संसूचयति। सभायाः साधारणकृत्यनिष्पत्त्यनन्तरम् अध्यक्षमहोदयैः सुचिराद्दूर्ध्वं स्वर्गतानां सुविश्रुतकीर्तीनां विक्रमपुरप्रभव-स्मार्तप्रकाण्डानां काशीचन्द्रविद्यारत्नमहोदयानां चित्रमपावरणं कृतं प्रकटितश्च तेषामसामान्यगुणपर्यायस्तत्रभवद्भिः ढाकाप्रदेशवास्तव्यैः पण्डितप्रवरैः श्रीहेरम्बनाथतर्कतीर्थमहाभागैः संस्कृतवाङ्मयेन।

अनन्तरञ्च विचारपतिभिरध्यक्षमहोदयैः संस्कृतविद्याया गौरवादिकं सोपपत्तिकमुपन्यस्य तत्र समुपनतानां सामाजिकजनानां चित्तमावर्जयितुं प्रवर्त्तिता महाजनोचिता व्याख्यानवचनपरिपाटी, यया समावर्जितः समालिखित इव मुग्ध इव समाविष्ट इव सर्वतः समजनिष्ट सामाजिकसमाजः।

अथ सभापतेः साधुवादानन्तरं निःशेषमवसिते सभाकृत्यजाते परिषत्सदस्यैः संस्कृतनाट्यप्रयोगकुशलैरतिचातुर्येण सुप्रयुक्तमभूत् कविशूद्रकविरचितं मृच्छकटिकं नाम प्रकरणं, यस्मिन्नसामान्यं नैपुण्यं प्राकाश्यमगात् सुचिरात् प्रभृत्येवाभिनयदक्षाणां परिषत्सपक्षाणाम्। ततो रात्रेः प्रायेणैकघटिकायां सम्मर्दसम्पीडितानां संख्यातीतसामाजिकानां साधुवादेन सम्भावितः समाप्तिमापत् संस्कृत-साहित्य-परिषदो वार्षिकमहोत्सवः। बहोः कालादनन्तरं परिषदस्तादृशीमुत्सवसमृद्धिमनुभवन्तो वयमस्याः क्रमेणोपचयमाशास्महे। इति शम्।

———

# संस्कृत-साहित्य-परिषदः अष्टात्रिंशद्वर्षस्य (१३५० वङ्गाब्दस्य) आय-व्यय-निष्कर्षः

## (१) साधारणकोषः

### आयः

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| सेण्ट्राल्-व्याङ्क् इत्याख्यधनागारे | ३२३≶० |
| हस्ते | ६५॥‐० |
| शुल्कपत्रे | ७।=५ |
| वृत्तिरूपेण (कलिकातातः) | ७६५॥० |
| (स्थानान्तरात्) | ३१८) |
| सामयिकदानेन दातृभ्यः | १४७) |
| गवर्णमेण्ट्सकाशात् (१९४३-४४) | ६००) |
| कर्पोरेशन-सकाशात् पुस्तकालयार्थम् (१९४२-४३ | ५०७) |
| ,, चतुष्पाठीसाहाय्यरूपेण (१९४२-४३) | २१६) |
| पुस्तकादिविक्रयात् | १०७।=० |
| प्रावेशिकरूपेण | ३॥० |
| भिः पिः शुल्कपत्रात् | ६) |
| कुसीदरूपेण | ५५) |
| अन्यतः | १४॥१० |
| गृहकोषात् ऋणरूपेण | २७५) |
| सम्पादकादिसकाशात् | ३४०) |
| अग्रिमादिप्रत्यर्पणात् | २३६॥० |
| | ४३२०॥।१५ |

### व्ययः

| | |
|---|---|
| पत्रिकार्थम् | ५८७।५ |
| पुस्तकालयार्थम् | ७४२।० |
| पुस्तकप्रकाशार्थम् | २॥० |
| सभाभिनयाद्यर्थम् | २०=० |
| शिक्षाविभागार्थम् | २५३॥।१५ |
| गृहभाटकालोकाद्यर्थम् | ८२८।≶० |
| वर्त्तनाद्यर्थम् | ४२३=१० |
| गृहोपकरणाद्यर्थम् | २६॥।‐५ |
| पाथेयार्थम् | २७।≶० |
| साधारणमुद्रणाद्यर्थम् | ७।‐१० |
| पत्रादिशुल्कपत्रार्थम् | २०॥० |
| प्रचारार्थम् | २६॥।=१५ |
| सारस्वतपरीक्षार्थम् | ३५॥।५ |
| भिः पिः शुल्कपत्रार्थम् | १३॥।० |
| विविधविषयार्थम् | १३॥।≶० |
| गृहकोषस्य ऋणशोधनार्थम् | ३००) |
| सम्पादकानामृणशोधनार्थम् | ६०६॥।‐१५ |
| अग्रिमादिप्रदानार्थम् | २४७) |
| | ४१८६॥।=० |
| उद्वृत्तः | |
| सेण्ट्राल-व्याङ्क-इत्याख्यधनागारे (सेः हिः ३७८७) | ११३॥‐१५ |
| हस्ते | १०॥=१० |
| शुल्कपत्रे | ६॥=१० |
| | ४३२०॥।१५ |

(२) गृहकोषः

( १३५० वङ्गाब्दे )

| | |
|---|---|
| १३४९ वङ्गाब्दस्य अवशिष्ट :— (अश्विनीदत्तवर्त्मस्थ-गृहादि-मूल्य १४६८ । समेतम् ) | ३६५३॥।५ |
| १३५० (अश्विनीदत्तवर्त्मस्थभूम्यादि विक्रयेण सामयिक-दानेन च) | ९९५०≶० |
| | १३६०३॥।≶५ |
| १३५० वङ्गाब्दे व्ययः | १०॥५ |
| | १३५९३।≶ |
| अश्विनीदत्तवर्त्मस्थगृहादिमूल्यम् व्यवकलय्य | १४६८।० |
| उद्वृत्तः | १२१२५≶० |

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| ५'।. गवर्णमेरट्लोनपत्रे | १०००) |
| सेरट्राल व्याङ्कागारे (सं ५८०१) | ३४८॥० |
| ,, ,, (सं ३७८७) | १७≶५ |
| वेङ्गलसेरट्रालव्याङ्कागारे | १०५१६≶१५ |
| | ११८८५≶० |
| परिषदः साधारणकोषे ऋणं प्रदत्तम् | २४०) |
| | १२१२५≶० |

(३) ग्रन्थालयकोषः

(१३५० वङ्गाब्दे )

| | |
|---|---|
| गतवर्षस्य प्रत्यर्पणावशिष्टः | ७८२) |
| १३५० वङ्गाब्दे न्यासतया प्राप्तः | १९६) |
| | ९७८) |
| १३५० वङ्गाब्दे प्रत्यर्पितः | ९१) |
| | ८८७) |

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| पोष्टाफिसागारे | १३॥~१५ |
| १३४८ वङ्गाब्दपर्यन्तम् साधारणकोषे ऋणरूपेण न्यस्तम् | ६२१॥~५ |
| सेरट्रालव्याङ्कागारे (सं ३७८७) | २५१॥।~० |
| | ८८७) |

(४) स्थायि-कोषः

| | |
|---|---|
| गवर्णमेरट लोनपत्रे | १००) |
| उद्वृत्तः | १००) |

श्रीरामकृष्णचक्रवर्ती
आय-व्ययलिपिरक्षकः
जे. सि. चक्रवर्ती
आय-व्ययलिपिपरीक्षकः ।

श्रीअमरेश्वरठाकुरः
श्रीदुर्गामोहनभट्टाचार्यश्च
सम्पादकौ ।

# संस्कृत-साहित्य-परिषदः

१३५२ वङ्गाब्दीया कार्यनिर्वाहक-समितिः

सभापतिः—१। महामहोपाध्याय-श्रीयुक्त दुर्गाचरण सांख्य-वेदान्ततीर्थः।

सहकारि-सभापतयः—२। महामहोपाध्याय-श्रीयुक्त अनन्तकृष्ण शास्त्री, ३। महामहोपाध्याय-श्रीयुक्त-कालीपदतर्काचार्यः, ४। पण्डित-श्रीयुक्त-द्वारिकानाथ-न्यायशास्त्री, ५। पण्डित-श्रीयुक्त-तारानाथन्याय-तर्कतीर्थः, ६। डक्टर श्रीयुक्त उपेन्द्रनाथघोषालः, एम. ए., पि-एइच. डि., ७। पण्डित-श्रीयुक्त-जानकीनाथ-शास्त्री, ८। श्रीयुक्त अमरेश्वर ठाकुरः, एम. ए., पि-एइच. डि. सम्पादकौ—९। श्रीयुक्त-सातकड़िमुखोपाध्यायः, एम. ए., पि-एइच.डि. १०। श्रीयुक्त-चपलाकान्त-भट्टाचार्यः, एम. ए., वि. एल.। सहकारि-सम्पादकाः—११। श्रीयुक्त-दीनबन्धु-साहित्यशास्त्री, १२। श्रीयुक्त-रामकृष्णचक्रवर्ती, एम. ए., १३। श्रीयुक्त-अशोकनाथभट्टाचार्यः, वेदान्ततीर्थः, एम. ए., पि. आर. एस., १४। श्रीयुक्त-विष्णुपदभट्टाचार्यः काव्यतीर्थः, एम. ए.. १५। श्रीयुक्त-देवेन्द्रचन्द्र गुप्तः, एम. ए., १६। श्रीयुक्त-सरोजेन्द्रनाथभञ्जः, काव्यपुराणतीर्थः, एम. ए., कोषाध्यक्षः — १७। श्रीयुक्तः अक्षयकुमारमित्रः।

अन्ये सदस्याः—१। श्रीयुक्त-कालीपदविद्याभूषणः, व्याकरणतीर्थः, २। श्रीयुक्त-जगन्मोहनज्योतिर्विनोदः, ३। श्रीयुक्त-त्रिदिवनाथ रायः, एम. ए., वि. एल., ४। श्रीयुक्त-दुर्गामोहनभट्टाचार्यः, काव्य-सांख्य-पुराणतीर्थः, एम. ए., ५। श्रीयुक्त-प्रबोधचन्द्रचट्टोपाध्यायः, एम. ए., वि. एल., ६। कविराज-श्रीयुक्त-मनोरञ्जन-सांख्य-वेदान्ततीर्थः, ७। श्रीयुक्त-योगेन्द्रमोहनविद्यारत्नः, ८। श्रीयुक्त-रामधन-भट्टाचार्य्यः शास्त्री ९। श्रीयुक्त-वामापदविद्यारत्नः, १०। भिषकशिरोमणि श्रीयुक्त-विमलानन्दतर्कतीर्थः, ११। डाः श्रीयुक्त-भूपेन्द्रनाथवसुजः, एम. वि., १२। श्रीयुक्त-देवेन्द्रनाथमुखोपाध्यायः, एम. ए., वि. एल., १३। श्रीयुक्त-कृष्णगोपाल-गोस्वामी, शास्त्री, स्मृतिमीमांसातीर्थः, एम. ए., पि. आर. एस., १४। ब्रह्मचारी सदानन्दः, १५। श्रीयुक्त-प्रकाशचन्द्रवन्द्योपाध्यायः, वि. ए., १६। श्रीयुक्त-कार्तिकचन्द्रचक्रवर्ती, १७। श्रीयुक्त-हेमन्तकुमारतर्कतीर्थः, १८। श्रीयुक्त-रामधन-स्मृतितीर्थः, १९। श्रीयुक्त-विजलीमोहनमुखोपाध्यायः, एम. ए., वि. एल.। २०। श्रीयुक्त-वङ्किमचन्द्रभट्टाचार्यः, एम. ए., वि. एल., २१। श्रीयुक्त-कालिदास-रायः, वि. इ., सि. इ., एम., आइ. इ., २२। श्रीयुक्त-सीताराम शास्त्री, २३। श्रीयुक्त-वसन्तकुमारमित्रः, वि.ए.

१३५२ वङ्गाब्दीय-विभागीय-कर्मपरिचालकाः

पत्रिका-सम्पादकः—महामहोपाध्याय-श्रीयुक्त-कालीपदतर्काचार्य्यः। पत्रिका-सहकारि-सम्पादकः—श्रीयुक्त-हेमन्तकुमारतर्कतीर्थः। ग्रन्थागारिकौ—श्रीयुक्त जानकीनाथशास्त्री, श्रीयुक्त-दीनबन्धुसाहित्यशास्त्री। सहकारि-ग्रन्था-

गारिकौ—श्रीयुक्त-[illegible]भट्टाचार्य्यः काव्यतीर्थः, एम. ए., श्रीयुक्त-सरोजेन्द्रनाथभञ्जः, काव्य-पुराणतीर्थः, एम. ए.। आचार्यः—श्रीयुक्त-सीतानाथसिद्धान्तवागीशः। अध्यापकः—श्रीयुक्त-रामधनभट्टाचार्य्यः शास्त्री। नाट्याचार्यः—श्रीयुक्त-जगन्मोहनज्योतिर्विनोदः। नाट्य-सम्पादकौ—श्रीयुक्त-कार्तिकचन्द्रचक्रवर्ती, श्रीयुक्तः अशोकनाथ भट्टाचार्य्यः, एम.ए., पि. आर. एस., वेदान्ततीर्थः। सङ्गीतशिक्षकौ—श्रीयुक्तविष्णुपददत्तः, श्रीयुक्तसनत्कुमारचट्टोपाध्यायः, एम. ए., बि. टि.। आय-व्यय-लिपिरक्षकः—श्रीयुक्त-देवेन्द्रचन्द्र गुप्तः, एम. ए.। आय-व्यय-लिपिपरीक्षकः—श्रीयुक्त-जनार्दनचन्द्रचक्रवर्ती, बि. कम., जि. डि. ए., आर. ए.।

### १३५२ वङ्गाब्दीया उपदेशक-समितिः

सभापतिः—सार-श्रीयुक्त-नृपेन्द्रनाथसरकारः, के. सि. एस. आइ.

अन्ये सदस्याः—१। माननीयो न्यायाधीशः श्रीयुक्तबिजनकुमारमुखोपाध्यायः, एम. ए., डि. एल., २। माननीयो न्यायाधीशः श्रीयुक्त-रूपेन्द्रकुमारमित्रः, एम. एस. सि., डि. एल., ३। श्रीयुक्त-आदित्यनाथमुखोपाध्यायः, एम. ए., पि-एइच. डि., ४। श्रीयुक्त-सुनीतिकुमारचट्टोपाध्यायः, एम. ए., डि. लिट्., ५। रायबाहादुर-श्रीयुक्तगोविन्दलालबन्द्योपाध्यायः, कविरत्नः, बि. ए., ६। श्रीयुक्त-जगदीशचन्द्रवेदव्यासः, ७। श्रीयुक्त-दक्षिणाचरणभट्टाचार्यः, ८। श्रीयुक्त-दामोदरदासखान्ना, ९। महाराज-श्रीयुक्तभूपेन्द्रचन्द्रसिंहः, बि. ए. (सुसङ्ग), १०। राजा श्रीयुक्त-भूपेन्द्रनारायणसिंहबाहादुरः, एम. एल. सि. (नसीपुरस्थः), ११। श्रीयुक्त-यतीन्द्रनाथवसुजः, एम. ए., एम. एल.ए., १२। श्रीयुक्त-यतीन्द्रविमलचतुर्धुरीणः, पि-एइच. डि., १३। श्रीयुक्तरमाप्रसादमुखोपाध्यायः, एम. ए., बि. एल., १४। श्रीयुक्तबैजनाथबाजोरिया, एम. एल. ए. (सेण्ट्राल), १५। महामहोपाध्याय-श्रीयुक्तशकलनारायणशास्त्री, १६। कुमार-श्रीयुक्त-शरदिन्दुनारायणरायः, प्राज्ञः, एम. ए., १७। श्रीयुक्त-शैलेन्द्रनाथमित्रः, एम, ए., १८। श्रीयुक्त-सतीशचन्द्रघोषजः, एम. ए., १९। महामहोपाध्याय-श्रीयुक्तसीतारामशास्त्री, २०। महामहोपाध्याय-श्रीयुक्त-योगेन्द्रनाथवेदान्ततीर्थः, २१। श्रीयुक्त-विमलाचरणलाहा, एम. ए., पि-एइच. डि., २२। कुमार-श्रीयुक्तविमलचन्द्रसिंहः, एम. ए., २३। श्रीयुक्त-वसन्तकुमारचट्टोपाध्यायः, एम. ए., २४। श्रीयुक्त-सत्येन्द्रनाथसेनजः, एम. ए., २५। श्रीयुक्त-वामाचरणकाव्यतीर्थः, २६। श्रीयुक्त-गणपतिसरकारः विद्यारत्नः, २७। श्रीयुक्त-चण्डीचरणतर्कतीर्थः, २८। श्रीयुक्त-गङ्गाधरमुखोपाध्यायः, एम. ए., बि. एल., २९। श्रीयुक्तपञ्चाननियोगी, एम. ए., पि-एइच.डि.।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1673

Vol. XXVIII. June, 1945

No. 2. १८६७-शकीये

२८श-वर्षस्य ज्यैष्ठे

२य-संख्या मासे






इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

प्रवव्राज कान्तो वसन्तः सुदूरे
निदाघः खरो लक्ष्यते दीप्तसूरे।
मधुश्रीवियोगात् पिकाः क्वापि लुप्ताः
कुरङ्गा दिनान्ते तरुच्छायसुप्ताः ॥

———

## मतिमञ्जरी

संस्कृतविद्याया जीवितप्रत्याशा।—मान्या वाचकमहाभागाः! सुचिरादूर्ध्वं सर्वत्र बहुमता संस्कृतविद्या साम्प्रतिकानां मतिमतां विचारेण निरायतिकेव प्रतीयमाना नासादयति क्वापि समादरं जनसङ्घानाम्। सायतिकेषु विद्यान्तरेष्वेव जना रमन्ते समुद्घोषयन्ति च तेषामेव प्रतिपदं विजयभूमानम्। तदेतदालोचयन्तः प्रेक्षावन्तः संस्कृतविद्यायाः शुभायति-

सम्पिपादयिषया तया सहैव नियमेन देशान्तरीणसंस्कृतशिक्षानुरूप्येण गणितभूगोलेतिहासादीनां समयानुगुणानां विषयाणां शिक्षणमपि वङ्गीय-संस्कृतसमितिपरीक्षाद्वारा व्यवस्थापयितुं प्राथमिकं विचारमुपक्रान्तवन्त इति श्रूयते। तदिदं सुतरां त्वरया क्षीयमाणायाः संस्कृतविद्याया अपमार्जयत्यचिरेण जीवनहानिशङ्काम्। क्षेमङ्करः परमेश्वरः प्रेक्षावताममीषां शुभमिमं विचारं सिद्धान्तपथानुवर्तनेन सफलं कुर्यादित्याशास्महे। संस्कृत-विद्यया समं नियमेन गणितादीनां शिक्षाव्यवस्थापनया विश्वविद्यालयेन यद्यस्या योगः कथञ्चित शक्यते सम्पादयितुं तदैवास्या जीवितप्रत्याशा नान्यथेति दृढ़मेव वयं प्रतीमः। तदचिरेणास्य विचारस्य सिद्धान्तं क्रियमाणं कामयामहे।

---

## पतञ्जलिः

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥

इत्यादितः सुप्रथितवचःपरम्परातो योगसूत्रकारस्य महाभाष्यकारस्य चरकसंहिताकारस्य चाभिन्नत्वं प्रतीयते। तच्चाभिन्नत्वं प्रमाणसिद्धं वा नामगतसादृश्यैकमूलं वेति साम्प्रतं विचार्यते।

अत्र प्रथमतस्तावदिदमेव स्मृतिपथमधिरोहति यत् नव्यसूत्रभाष्ये (२।२।६) महर्षिणा पतञ्जलिना अनेकशब्दस्य एकवचनत्वमेव व्यवस्थापितम्। तथा च तद्वचनम्—

इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति संगृहीतं भवति।

किम्?

अनेकमिति ।

किमत्र संगृहीतम् ?

एकवचनम् ।

कथं पुनरेकस्य प्रतिषेधेन बहूनां सम्प्रत्ययः स्यात् ?

प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति । तद् यथा । आसय शायय भोजयानेकमिति ।

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते, यत्र खलु न प्रसज्येते तत्र कथम् । अनेकस्तिष्ठतीति ।

भवति चैवंजातीयकानामप्येकस्य प्रतिषेधेन बहूनां संप्रत्ययः । तद् यथा । न न एकं प्रियम् । न न एकं सुखमिति ।

न केवलं महर्षिणानेकशब्दस्यैकवचनं प्रतिपादितम्, प्रयोगोऽपि सर्वत्रैकवचनान्तस्यैव विहितः । सूत्रकारस्य वार्तिककारस्य चैतदेव सम्मतम् । तथाहि—

अनेकमन्यपदार्थे [ पा० २।२।२४ ] ।

छन्दस्यनेकमपि साकाङ्क्षम् [ पा० ८।२।३५ ] ।

इति सूत्रद्वितय एवानेकशब्दस्य प्रयोगोऽष्टाध्याय्यामुपलभ्यते, उभयत्रापि च विस्पष्टमेवैकवचनं सन्दृश्यते ।

अनेकमपीति तु वचनात् सिद्धम् [ वार्त्तिक १।२।३६।३ ] ।

प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् [ वा० १।२।६४।१ ] ।

प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेत् तदपि प्रत्यर्थमेव [ वा० १।२।६४।३० ] ।

यावतामेवाभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनाप्यनेकस्याभिधानम् [ १।२।६४।३१ ] ।

आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात् सन्देहः [ वा० ६।२।३६।१ ] ।

स्वार्थेऽवधार्यमाणेऽनेकस्मिन् [ वा० ८।१।१२।४] ।

इति वार्त्तिकेष्वप्यनेकशब्दस्य सर्वनामत्वमेकवचनत्वञ्च स्फुटमेव समवलोक्यते।

एक इन्द्रोऽनेकस्मिन क्रतुशत आहूतो युगपत सर्वत्र भवति [ भा० १।२।६४ ]।

अथवैतर्ह्यनेकमनुबन्धशतं नोच्चार्यम् [ भा० १।१।१ ]।

नैकेन घटेनानेको युगपत कार्यं करोति, एवमिममकारं नानेको युगपदुच्चारयेत [ भा० १।१।१ ]।

न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत परत्वेन सम्भवोऽस्ति [ भा० १।१।४४ ]।

इत्यादिष्वधिकषष्ठेषु वाक्येषु भाष्यकृताप्येकवचनं सर्वनामत्वञ्चास्थितम्।

निरुक्तेऽप्यनेकशब्दस्यैकवचनमेवोपलभ्यते। यथा 'तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति' [ २।१५ ] इति।

शतपथब्राह्मणे 'अनेककामः अनेकाकिन' इत्यादयः शब्दाः सन्दृश्यन्ते शुद्धस्त्वनेकशब्दो नोपलभ्यते।

तैत्तिरीयारण्यकेऽपि 'अनेकेन साम्ना' इत्यत्रैकवचनमेवोपलभ्यते।

श्वेताश्वतरोपनिषदि पुनः 'वर्णाननेकान' [ ४।१।१४ ] इत्यत्र बहुवचनान्तोऽनेकशब्दः प्रथमतो नयनपदवीमवतरति।

शाबरभाष्येऽपि 'अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम्' [ मी० सू० १।१।४ भाष्य ] इत्यादिष्वेकवचनमेव प्रयुक्तम्।

योगसूत्रे 'प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्' [ ४।५ ] इत्यत्र विस्पष्टमेवानेकशब्दस्य बहुवचनत्वमुपलभ्यते।

एवञ्च यास्कपाणिनिकात्यायनमतानुवर्तिना पतञ्जलिनानेकशब्दस्यैकवचनत्वस्याङ्गीकारात प्रतिपादनात प्रयोगाच्च तस्यैव शब्दस्य बहुवचनं प्रयुक्तवतो योगसूत्रकारादन्यत्वं वज्रलेपायत इति शम्।

---

( सर्वतोभद्रौ )

वेला काममकालावे मानवांधवानमा ।
पिको वीररवी कोपि सारसाररसा रसा ॥६४॥
गानायाममया नागा दीनरावरा नदी ।
राका हाससहाकारा सारहाववहा रसा ॥६५॥

इत्थं वसन्तविभवे भुवने प्रकीर्णे
चित्तं दधार विकृतिं लघु कामभाजाम् ।
मेघोदये सति समीरकृतानुबन्धे
स्रोतस्वतीपयसि वीचिरुदेति शीघ्रम् ॥६६॥

तदा वणिक् शङ्खपतिः समाकुलः सुदीर्घकालं प्रियया वियोजितः ।
सस्मार जायां सुदृढं स्मरार्चिषा प्रतापितः कोमलवृत्तिभागसौ ॥६७॥
तरीं व्रजन्तीमपि वातवद्द्रुतं न शीघ्रतायां प्रशशंस लेशतः ।
सुदूरमुत्सृज्य तरीं तदन्तरं तदातिशीघ्रं प्रविवेश कङ्कणम ॥६८॥
मनोमयः सोऽयमुपेत्य कङ्कणं शरीरवत्या प्रियया सुसङ्गतः ।
कियन्न लोकोत्तरभोगवैभवं विवेश चित्तेन कृतं रहः कृती ॥६९॥
कलावतीं कान्तवियोगतः कृशां दृशा मनःकल्पितया विलोकयन ।
विषादमासाद्य निवेद्य सान्त्वनाम् उपाचरत कोमलवाग्भिरञ्जसा ॥७०॥
प्रिये, किमेवं कृशतामुपाश्रिता कथं नु वेशं श्रयसे मलीमसम् ।
पतिव्रतायाः पतिसङ्गभङ्गतस्तथाथवा युक्तमेव दुर्विधा ॥७१॥
करं सुसंहृत्य गते दिवाकरे दिशं प्रतीचीं मलिना सरोजिनी ।
कुमुद्वती शान्तकरे सुधाकरे नष्टे विनष्टेव दधाति तामसम् ॥७२॥
जहीहि मालिन्यमुपेहि सत्वरम् समुज्ज्वलं राजसवेशमात्मना ।
अयं प्रियस्ते सविधं समागतः प्रिये विषादस्तव नाद्य शोभते ॥७३॥
विलोकयान्तःपुरकुञ्जवाटिका बहूपचारा शुकसारिकारवैः ।
मरुल्ललत्पल्लवहस्तचालनैर्मया समं त्वामुपमन्त्रयत्यसौ ॥७४॥

सुसंस्कृता ते सरसैः सखीगणैरियं शिलास्ते वकुलस्य मूलतः ।
प्रसूनवर्षोपहितेऽत्र संस्तरे सुकोमले शायय कोमलं वपुः ॥७५॥

रुदन्ति भृङ्गास्तव केशनिर्जिताः
पिबन्ति पौष्पाणि मधूनि शान्तये ।
स्मितेन हंसा विजिता जलं श्रिता
विभुञ्जते तत्सदृशान् मृणालकान् ॥७६॥

सुरम्यसङ्गीतरवेण भर्त्सिताः पिकाः कलङ्कैरुपलिप्तविग्रहाः ।
विहाय गेहं विजने प्रतस्थिरे स्वरस्य कार्कश्यमवेत्य दुःखदम् ॥७७॥
बाहुश्रियस्ते भयमाश्रिता लता विकम्पते मालयवातचालिता ।
अलक्तकारक्तकराच्च पल्लवाः पराजयं रक्तरुचो व्रजन्त्यमो । ७८॥
इदं तथान्यत् परिचिन्तयन्नसौ यदाभवच्छङ्खपतिर्मनोमयः ।
तदा तरीं नौपरिचालका द्रुतं प्रवेशयामासुरितः पयोनिधिम् ॥७९॥
सुतोपमं शङ्खपतिं प्रबोधयन् वणिग्वरो लक्षपतिर्जगाद तम् ।
अवेत्य भावेन तदान्यचित्ततां प्रशान्तवाचा निपुणान्तरः परम् ॥८०॥
हे वत्स गाढ़ं विमनाः प्रतीयसे कथं त्वयासादि विषादबाधना ।
अलं विकारेण वृणीष्व सान्त्वनाम् अकालहीनं स्वगृहं प्रलप्स्यसे ॥८१॥
विलोकयाम्भोनिधिमम्बुमात्रकम् सुदूरविस्तीर्णसुनीलशून्यवत् ।
तटान्तरं नैव विलोचनातिथिः प्रदृश्यते केवलमम्बुताण्डवः ॥८२॥
नक्रादिचक्रैर्मकरैस्तिमिङ्गिलैस्तिमिप्रकाण्डैर्जलकुञ्जरादिभिः ।
निरन्तरं सङ्कुलमेतदन्तरं सुदुष्प्रधृष्यस्तत एष नीरधिः ॥८३॥
विदार्य भूमिं धरणीतलं गतान् पितुर्मखाश्वाय पुरा नृपात्मजान् ।
ददाह रोषात् कपिलो रसातले कृतस्ततस्तैः सगरात्मजैरयम् ॥८४॥
सीतां समुद्धर्त्तुमना महामनाः श्रीरामचन्द्रः कपिभिः सहायकैः ।
बद्ध्वा तमेतं रजनीचरालयं गत्वावधीद् वैश्रवणं महामृधे ॥८५॥
महर्षिणा कुम्भभवेन पूर्वतः पपे यदायं सकलः सरित्पतिः ।
तदैव तज्जाठरवह्निसङ्गमात् किमेष और्वानलसम्पदः पदम् ॥८६॥

# वृत्तवर्तिका

संस्कृत-परीक्षाफलम् ।—विगतस्य पञ्चचत्वारिंशदुत्तरैकोनविंशतिशततमखृष्टाब्दीय-मे-मासस्य षड्विंशे दिवसे परीक्षकपरिषदो विचारेण वङ्गीय-संस्कृतसमितेरुक्तखृष्टाब्दीयसंस्कृतपरीक्षायाः फलं निर्धारितमुपलभ्यते । ऐषमः किल संस्कृतपरीक्षायां यद्यपि बहूनां परीक्षार्थिनामनुत्तीर्णतां समीक्ष्य परीक्षकपरिषदा वङ्गीय-संस्कृत-समिति-परिचालकपरिषदा च वर्षान्तरापेक्षया स्वल्पमात्रा अनुग्रहाङ्का वितीर्णास्तथापि समुत्तीर्णानां तथा संख्याधिक्यं नाजनिष्ट । अनया रीत्या क्रमेण प्रतिवर्षं सत्यामनुग्रहाङ्कानां स्वल्पतायां नूनं विद्यार्थिनः स्वावलम्बना भवितुं प्रयत्नविशेषमाश्रयेयुः । तेनैव च क्रमेण प्रकर्षाद् विमुक्तायाः संस्कृतविद्यायाः प्रकर्षोऽपि पुनः प्रतिष्ठां गन्तेति सम्भावयामः ।

प्रसङ्गेन किञ्चिदानन्दकरमाशास्पदञ्च वृत्तं श्रीमतसु वाचकमहाभागेषु समुपहरामः ;—विकानीरप्रदेशवास्तव्यानां श्रीनाथमलजी-रामपुरियानामधेयानां सुप्रसिद्धश्रेष्ठिनां श्रीमूलचन्द्र-रामपुरियानामधेयः सप्ताष्टवर्षदेशीयः पुत्रः श्रीयुक्त-दीनेशमिश्राणां छात्रो वर्तमानवर्षीयपरीक्षासु लघुकौमुदी-परीक्षाम्प्रकर्षेण समुत्तीर्णः । सोऽयं बालको व्याख्यानक्षमोऽपि समीक्षितोऽस्माभिः । तथाभूतानां धनिकानां वणिजां संस्कृतविद्यापरिग्रहे रतिविशेषेण तथा तादृशे स्वल्पमात्रके वयसि श्रीमतस्तस्य परीक्षासमुत्तरणेन यथा भाविनि काले संस्कृतविद्याया जीवितप्रत्याशा प्रेक्षावतां चेतसि पदं कुरुते, तथैव राजकीयविद्यालयादावध्यापनादिकृत्येषु व्याप्रियमाणानां केषाञ्चिदध्यापकादीनामद्यतनवयोवर्षानुपातेन स्वल्पमात्रके वयसि विद्याशिक्षणारम्भासम्भवसम्भावनासम्भवः कलङ्कः परिमार्जितो भवतीति सुतरां वयं प्रसीदामः ।

नवीन-संस्कृतनाटकाभिनयः ।—वर्तमानखृष्टाब्दीये मे-मासे तथा जुन-मासे यथाक्रमं पण्डितमहामण्डलसदस्यैरुदयनसमितिसदस्यैश्च महामहोपाध्याय-श्रीहरिदास-सिद्धान्तवागीश-कृतस्य 'वङ्गीय-प्रताप'-नाटकस्य तथा हावड़ा-संस्कृत-साहित्य-समाजसदस्यैः पण्डितप्रवर-श्रीकालीकिङ्कर-विद्यालङ्कार-काव्यतीर्थ-प्रणीतस्य 'अहल्याचरित'नाटकस्य अभिनयः कृतः । अभिनयद्वयमेव पात्राणां प्रयोगकुशलतया सु-समीचीनं जातम् । अनेन क्रमेण नवीनरूपकाभिनयादिभिः संस्कृत-विद्याया निरवद्यं प्राचीनं रूपं वयं प्रचरद्रूपमिच्छामः ।

---

## सुभाषितम्

परेषु ये द्वेषपराः स्वभावाद्
द्वेष्याः परेषामपि ते भवन्ति ।
चैतन्यदेवस्य तुलां वहन्तः
सन्तः कियन्तो भुवि संघटन्ते ॥

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता । Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17. R. G. Kar Road, Calcutta.

Reg. No. C 1073



Vol. XXVIII. July, 1945

No. 3. १८६७-शकीये

२८श-वर्षस्य आषाढे

३य-संख्या मासे




इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्
(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)
सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः
सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

निदाघपरिपाकतस्तपनतापतप्तां महीं
शमं गमयितुं नभः समुपयान्ति पाथोधराः।
कदम्बकलिकावली दलरुचा न संलक्ष्यते
विशीर्णवपुषा सरित सलिलवर्षमुद्वीक्षते।

---

## मतिमञ्जरी

वङ्गीयसंस्कृतसमितेः परीक्षोत्तरणसंख्या।—वङ्गीयसंस्कृतसमितिर्नाम वङ्गेषु संस्कृतशिक्षायाः संरक्षणाय संवर्द्धनाय च प्रथितं प्रतिष्ठानम्। या किल परीक्षादिकृत्यपरम्पराभिः स्वीयमुद्देश्यं प्रतिवर्षं निर्वर्त्तयन्ती देशान्तरेष्वपि प्रथमाना मानातिरेकं समर्जयति। तया च प्रथमपरीक्षा

द्वितीयपरीक्षा उपाधिपरीक्षा चेति विभागत्रयेण विद्यार्थिनां परीक्षा निष्पाद्यते। तत्र प्रथमपरीक्षायां द्वितीयपरीक्षायाञ्च द्वौ द्वौ दिवसौ विद्यार्थिनां प्रश्नपत्रद्वयस्य उत्तरं लेखद्वारा विवरणीयं भवति। उपाधिपरीक्षायाञ्च वैष्णव-दर्शनं विना दर्शनान्तरेषु स्मृतौ च प्रथमतः प्रभृति दिनत्रयं लेखपरीक्षा चतुर्थदिवसे च मौखिकी परीक्षा विषयान्तरेषु च दिनचतुष्टयमेव लेख-परीक्षा सम्पाद्यते। ततः पञ्चमदिवसे विद्यार्थिभिराङ्गलभाषापरीक्षा स्वच्छन्दतो दीयते। तत्र प्रतिदिवसीयप्रश्नपत्रस्य एकशतं पूर्णसंख्या। प्रथमपरीक्षायां द्वितीयपरीक्षायाञ्च प्रतिप्रश्नपत्रोत्तरपत्रे त्रयस्त्रिंशत-संख्यातोऽन्यूनसंख्यालाभेन पत्रद्वयसंख्यासंकलनया अशीतिसंख्या-लाभे द्वितीयश्रेण्यां विंशत्यधिकैकशतसंख्यालाभे च प्रथमश्रेण्यां समुत्तीर्णो भवति परीक्षार्थी। उपाधिपरीक्षायां पुनः ज्योतिषे दर्शने स्मृतौ च प्रतिपत्रं त्रयस्त्रिंशतसंख्यातोऽन्यूनसंख्यालाभेन तदितरविषयेषु पुनः प्रतिपत्रं चत्वारिंशतसंख्यातोऽन्यूनसंख्यालाभेन पत्रचतुष्टये सङ्कलनया द्विशत-संख्यालाभे प्रथमश्रेण्यामुत्तीर्णो भवति। अत्र बहूनां विवादः समुप-लभ्यते—यथा केचिद् वदन्ति ;—यदुपाधिपरीक्षायां सङ्कलनया सम-पेक्षिता संख्या सुतरामधिकेति ततो न्यूनसंख्यया परीक्षार्थिनामुत्तरणं युज्यते। स्मृतिज्योतिषदर्शनभिन्नविषयेष्वपि प्रतिपत्रमुत्तरणाय सम-पेक्षिता चत्वारिंशतसंख्या समधिकेति तत्रापि त्रयस्त्रिंशतसंख्यामात्रापेक्षा युक्ता। अत्राभिरूपाः कतिपये वक्ष्यमाणरूपं निरूपयन्ति,—यत् ये नाम दर्शनादिविषयेषु कथञ्चित् पत्रविशेषे त्रयस्त्रिंशतसंख्यालाभेन तदितरविषयेषु तथैव चत्वारिंशतसंख्यालाभेन समुत्तीर्णा भवेयुस्ते परीक्षणीयविषयस्य समग्रमर्थमविजानन्त एव चरमपरीक्षामुत्तीर्य तत्तद्विषयेषु शिक्षकपदं प्राप्य विद्यार्थिनः शिक्षयेयुः, तेन तावदन्धपरम्परान्याय एव जगति समापतेत्। तद् यदि विशिष्टपण्डितपरम्पराया अविच्छेदः काम्यते, तदा प्रथम-परीक्षायां द्वितीयपरीक्षायाञ्चास्तु यथा तथा, चरमपरीक्षायामुत्तरण-योग्यसंख्याया न्यूनता कथमपि न प्रस्तावपथमधिरोढुमर्हति। इतोऽप्यधिक-

तरा संख्या यद्युत्तरणाय योग्या कल्प्येत, तदैव नियमेन पण्डितधाराया अविच्छेदः शक्यो भारतवर्षे समर्थयितुं नान्यथेति ।

अन्ये पुनरेवं वदन्ति—यत परीक्षायाम् उत्तरणयोग्या संख्या यदि नाल्पा स्यात, तदा तत्र बहवो विद्यार्थिनो विफलकामा मनोभङ्गेन संस्कृत-शिक्षातो विनिवृत्तास्तस्या जगति प्रसारं विघटयेयुः, तेन च तदालम्बानां पण्डितसंज्ञाभाजां तदुत्तीर्णतामूलकवृत्तिविलोपप्रसङ्गेन जगतो महानपकारः समापतेत । तत्र विमतिमतामेवं प्रतिपत्तिर्यथा,—संस्कृतविद्यायाः प्रसारमात्रेणैव परितोषश्चेन 'ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्' । प्रसारो मास्तु संस्कृत-विद्यायाः, यद्येकोऽपि सहस्रेषु याथार्थ्येन विद्वान सम्पद्येत, तदापि सेयं जीवेत । प्रसारमात्रेण तु क्रमशः प्राचीनकालोचितस्वरूपविमुक्ते रचिरेणैव सम्पतस्यते तपस्विन्यास्तस्या जीवनविप्रयोगः । तदेतत् सर्वं सुविचार्य कृत्यमार्गः समवधारयितव्यः । नहि युज्यते स्वल्पस्य हेतावहुपरिहाणमिति महाकविनिरुक्तार्थं सर्वप्रदेशीयसंस्कृतपरीक्षापरिचालकपरिषद्भिरवधानं दीयमानमभिलषामः ।

---

# भगवान् बुद्धो गौतमबुद्धश्च

[ निबन्धकः—श्रीसीतारामशास्त्री सप्ततीर्थः—साहित्य-व्याकरणाचार्यः ]

नाविदितमस्तीदं विद्वन्महाभागानां यत्साम्प्रतिका इतिहासविदो निखिला एव प्रायेण भगवतो बुद्धस्य गौतमबुद्धस्य चाभेदमैकमत्येनाभ्युपगच्छन्तीति । तेषां मतेन भगवान बुद्ध एव गौतमबुद्ध इति नाम्ना प्रख्यातिं गतः । स च खीष्टाब्दारम्भात ५६२ द्वाषष्ट्यधिकपञ्चशतवर्षेभ्यः पूर्वं राज्ञः शुद्धोदनात मायादेव्यां जन्म लेभे । अयमेव गौतमबुद्धो भागवतादिपुराणेषु भगवदवतारत्वेन पर्यगण्यत । तथा च येषु प्राचीनग्रन्थेषु भगवतो बुद्धस्य नामोल्लेखः परिदृश्यते, ते सर्वे ग्रन्था अमीषामितिहासविदां दृष्ट्या निरुक्तबुद्धाविर्भावकालानन्तरं प्रणीता विद्यन्ते, बुद्धवृत्तादि-

सम्बद्धयद्ग्रन्थकर्तृतया प्रसिद्धानां महर्षीणां समयो बुद्धकालात्परं न कथमपि साधयितुं सुशकस्त एते कैश्चिदन्यैरेव तत्तन्महर्षिनाम्ना बुद्धकालात्परं प्राणायिषतेति सिद्धान्तयन्ति। सोऽयमधुनातनानामितिहासविदां मतवादो न सुविचारपरीक्षित इति दर्शयितुं मया भगवद्बुद्धगौतमबुद्धयोर्भेदमवलम्ब्य किञ्चिद्विदुषां पुरस्तात् प्रस्तूयते, आशास्यते च यदत्र मान्या इतिहासकोविदाः स्वीयावधानदानेन समनुग्रहीष्यन्ति मामिति।

भगवान् बुद्धो गौतमबुद्धश्च श्रीमद्भागवत-तट्टीका-बोधिचर्यावतारादिग्रन्थानां पर्यालोचनया तयोर्नामजन्मधामपित्रादिनामधेयानां भेददर्शनेन परस्परं विभिन्नयोर्देशकालयोः प्रमितत्वेन च नाभिन्नाविति सुस्पष्टं प्रतीयते। तथा हि श्रीमद्भागवते समुपवर्णितस्य भगवतो बुद्धस्य जन्मनः प्रभृत्येव बुद्ध इत्यभिधानमासीत्, गौतमबुद्धस्य तु नामधेयं न पूर्वं बुद्ध इति समविद्यत किन्तु "सिद्धार्थ" इति। बुद्धइतिनामलाभस्तु महात्मनस्तस्य स्वीये पञ्चत्रिंशत्तमे वयसि समभवदिति बोधिचर्यावतारादिबौद्धग्रन्थेषु स्पष्टम्। किञ्च सुप्रसिद्धेनामरसिंहपण्डितेन स्वीये कोषग्रन्थे "सर्वज्ञः सुगतो बुद्ध" इत्यादिना "मुनीन्द्रः श्रीघनः शास्ता मुनि"रित्यन्तेन च सन्दर्भेण भगवतो बुद्धस्य अष्टादशनामानि प्रतिपाद्य "शाक्यमुनिस्तु यः" इत्यादिना ग्रन्थेन शाक्यसिंहस्य सप्ताभिधानानि पृथक्कृत्य व्याहारिषत। यदि नाम बुद्धो गौतमबुद्धश्चैक एवाभविष्यतां तदा नूनं बौद्धपण्डितेनामरेणापि न तयोर्नामानि पृथक्कृत्याभ्यधास्यन्तेति सुगभीरमालोचनीयं प्रेक्षावद्भिः। यद्यपि शाक्यसिंहेनापि बुद्धेति पदं समासादितमिति कृत्वा सोऽपि बुद्धेति नाम्ना व्यपदेष्टुं शक्यते, तथापि तयोर्व्यक्त्यभेद एवासीदिति न कथङ्कारमप्यनेन समभिधातुं शक्यम।

भगवतो बुद्धस्य पितुर्नाम भगवता कृष्णद्वैपायनेन श्रीमद्भागवते "बुद्धो नाम्नाजनसुतः कीकटेषु भविष्यति" इत्यादिना अजन इति स्पष्टमभ्यधीयत, गौतमबुद्धस्य तु जनको नाम्ना शुद्धोदनः समभवदिति अमरकोषे "शौद्धोदनि"रितिनामदर्शनेन बोधिचर्यादौ च व्यक्तम्। (क्रमशः)

 

कल्पान्तकाले परिवृद्धिमीयुषा परिप्लुतं सर्वमनेन पूर्वतः ।
संहृत्य सर्वं जगदात्ममायया शेते किलास्मिन् शयने जनार्दनः ॥८७॥
मायां रमारूपधरां पदान्तिके सेवापरां केचन कल्पयन्त्यहो ।
केचिन्निराकारममुं तदा हरिं दिशन्ति सन्तः सकलाश्रयं परम् ॥८८॥
पयोधिशय्यामधितिष्ठतो हरेः समुद्गतो श्रोत्रमलादनन्तरम् ।
पितामहस्तोत्रपदेन बोधितो जघान सोऽयं मधुकैटभासुरौ ॥८९॥
कल्पावसाने जलदाः समुद्धता अस्यैकदेशात् सलिलोपसंग्रहैः ।
विप्लावयन्ति ह्यभिवृष्य मेदिनीं सर्वामिमां कालनियन्त्रणावशात् ॥९०॥
अस्यान्तरे सन्ति महान्ति भूरिशो रत्नानि यैर्दीनतमोऽपि वासवः ।
विधिर्धनागारमिदं स्वमायतं न्ययुङ्क्त किं ग्राहगणान् विरक्षितुम् ॥९१॥
स्वदैन्यविध्वंसकृते सुरासुरा मिथो मिलित्वा धृतनागरज्जवः ।
शैलेन दण्डेन ममन्थुरादितस्ततः कियद् वा न समुद्गतं हितम् ॥९२॥
जलप्रवाहाः प्रपतन्ति सर्वतो नदीमुखेभ्यः प्रवरे पयोनिधौ ।
न तावता वृद्धिरमुष्य दृश्यते न वाम्बुदानां सलिलाहृतेः क्षतिः ॥९३॥
अस्मात् सुधांशुः समुपागतो जनिं संश्रित्य रत्नप्रचयात् परं महः ।
ततो महारत्नमिवाम्बरार्णवे प्रदीपयन्नेष जगद् विराजते ॥९४॥
पयोधिसाम्यं सुविशालमम्बरं दधाति नक्षत्रचयेन फेनिलम् ।
पयोधरैः किं सलिलाजिहीर्षया समन्ततस्तत्र विधीयते पदम् ॥९५॥
स्वजन्मभूमिप्रणयात् सुधाकरः पयोधितुल्यं गगनं विगाहते ।
तथा नभस्तुल्यपयोधिकामिनो ग्रहाश्च्यवन्ते समये किमम्बरात् ॥९६॥
शङ्खादयोऽटन्ति समुद्रसैकते परस्परस्पर्शजशब्दसूचिताः ।
क्वचित्तरङ्गेण भवन्ति विप्लुताः क्वचित् प्रकाशास्तदधःपरिक्रमात् ॥९७॥
जलान्तरावस्थिनिजातशीतता-विनोदनार्थं जलजन्तवः क्वचित् ।
सुरातपस्पर्शसुखं निषेवितुं सहस्रशः सैकतमाश्रयन्त्यहो ॥९८॥
विशेषतो मानुषसंस्तवाद् बहिश्चिरं जलाभ्यन्तरचारिणो हि ते ।
अस्मानकस्मादवलोक्य शङ्किताः क्रमात् समुद्रान्तरितः पतन्त्यमी ॥९९॥

इमान्यथान्यानि वचांसि तन्वतो वणिक्पतेर्लक्षपतेः प्रसान्त्वनात् ।
समुद्रशोभापरिदर्शने मनो निवेश्य शान्तिं स सुतापनिर्दधौ ॥१००॥
दिवानिशं क्षेपणिकानिपातनैर्गते सुदीर्घे समये तरी क्रमात् ।
नदीमुखेन स्वकदेशमागतः पुरानुभूतं परिवर्जितं चिरात् ॥१०१॥
स्वदेशतः प्रस्थितिवासरे पुरा समारुरोह स्वतरीं यतो वणिक् ।
तमेव देशं समुपेत्य नाविका विराममासेदुररित्रचालनात् ॥१०२॥
चिरात् परित्यक्तमविस्मृतं सदा स्वदेशमासाद्य वणिग्जनान्तरम् ।
सुखे निमग्नं समभून् सुधाह्रदे स्वगेहलाभेन न कस्य वा मुदः ॥१०३॥
तटे तरण्यस्त्वरया सुसंयता विसर्जिता वृत्तहरो गृहं प्रति ।
विलोलचित्तं चलिता जनास्तदा तरीस्थिरत्वं परितो व्यनाशयन् ॥१०४॥
प्रयाहि शीघ्रं विनिवेदय प्रियं गृहस्थितानामयमस्मि भव्यभाक् ।
तेषाञ्च कल्याणमुदाहरोत्तरम् इतीरितः सत्वरमेव सोऽभ्यगात् ॥१०५॥

आसाद्य लक्षपतिशङ्खपती तदा तौ
तीरेऽवतीर्य्य विमलानिलपूतकायौ ।
उत्कण्ठितौ प्रहितवृत्तहरव्यपेक्षाम्
अस्तं प्रयाति तपने परितो व्यधत्ताम् ॥१०६॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये वणिक्स्वदेशलाभो नाम त्रयोविंशः सर्गः ॥२३॥

## चतुर्विंशः सर्गः

अनपेक्ष्य क्षणं दूतः पूतचित्तः क्रियाक्रमे ।
पथि द्रुतगतिः प्रापद् वणिजः सदनान्तिकम् ॥१॥
तत्रापश्यत् पथि प्राप्तां व्रजन्तीं जनसंसदम् ।
उपलक्ष्य वणिग्वासं नितरां मोदपूरिताम् ॥२॥
केचिद् वदन्ति सत्यस्य महिमानमलौकिकम् ।
बहुदृष्टान्तविन्यासैर्मुखरीकृत्य पद्धतिम् ॥३॥

# रस-मञ्जरी

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

प्रियपाठकमहाभागाः ! सर्वथा विदितमेवैतदनेकेषां यत् केनचनारव-भूपालेन श्रेष्ठायाः पत्न्याः पातिव्रत्यस्खलनं प्रत्यक्षीकृत्य प्रतिज्ञातम्—प्रति-दिनमेवैकां लावण्यलीलास्थलीमुद्वाहेनासाद्य प्रातर्निशावसानं तां व्यापादयेयम् इति। स्थालीपुलाकन्यायेन सर्वासां सीमन्तिनीनां दोषाकरत्वमध्य-वस्यता भूयो भारायमाणानामासां क्रमेण समुन्मूलनाय महीमहेन्द्रेणैवं प्रत्यज्ञायि। कथासरित्सागर-सब्रह्मचारिणि आरब्ययामिनीसमाख्ये कथा-कोषे सविस्तरं विवरणमस्योपलभ्यते। एतस्यावितथत्वे चास्माकं लेशतो-ऽपि संशयो नास्ति। वधूशब्दस्य व्युत्पत्तिरेवात्र विस्पष्टतरं साक्ष्य-मावहति। तथाहि यथा तन्-धातोः कर्मणि ऊप्रत्यये तनूशब्दो निष्पन्नः, एवमेव वध्-धातोः कर्मणि ऊप्रत्यये वधूशब्दो निष्पन्नः। वधूशब्दस्य जायार्थत्वं स्नुषार्थत्वं योषार्थत्वं च लोके प्रसिद्धम्। एतेषु च प्राथमिक एवार्थः प्रसिद्धतमः। अत एव या वधायैव उदुह्यते सा वधूरित्यन्वर्थ एव वधूशब्दः। अयमेव च ऊप्रत्ययः पुंश्चलीशब्दस्य प्राचीनरूपे पुंश्चलूशब्दे समुपलभ्यते। अत एव भारतीयभाषातत्त्वमुपजीव्यारब्ययामिनी प्रणीतेति सुव्यक्तं प्रतीयत इति शिवम्।

———

# वृत्तवर्तिका

आषाढस्य प्रथमदिवसे संस्कृत-साहित्य-परिषदः प्रयत्नेन कलिकाता-महानगर्याम् महाबोधिसोसाइटीत्याख्यप्रसिद्धसभागृहे कलिकाता-विश्व-विद्यालयाध्यापकानां महामहोपाध्यायपदभाजां श्रीमतां योगेन्द्रनाथ-तर्कवेदान्ततीर्थमहाभागानामाध्यक्ष्येण कालिदासोत्सव-सभानुष्ठानं सुमह-तोत्सवेन समजनि। तत्र केचित् कालिदासं तत्काव्यञ्च समधिकृत्य श्लोकान् पठितवन्तः, केचित् निबन्धं वाचितवन्तः, केचित् कालिदासकाव्य

गतांशविशेषाणामावृत्तिं कृतवन्तः, काञ्चच्च समीचीनं व्याख्यानं सम्पादितवन्तः। यदेतत् सर्वमेव प्रकर्षस्य परां सीमामध्यरुक्षत्। अन्ते च सभापतयः सुमधुरगभीरार्थवाक्प्रपञ्चैः सञ्चलच्चेतसामपि सभासदामत्यावर्जयन्तो मनस्तत्त्वानि तदुत्सवसभायाः सुमहद् गौरवं साफल्यञ्च समपादयन्। प्रायेण रात्रेर्दशमहोरायां तत्सभा विघटितेति।

---

## नवीनग्रन्थविमर्शः

श्रीमता नवीनकविप्रवरेण टि एस् सुन्दरेशशर्मणा सुप्रणीतं 'ताञ्जोड जेनारेल ष्टोरस्' इत्याख्यप्रतिष्ठानेन प्रकाशं नीतं प्रेमविजयं नाम संस्कृतभाषामयं नवं रूपकमधिगतमस्माभिः, यत्र कवेः कल्पनावैचित्र्यमतिमात्रं रचनासौन्दर्यमसोदर्यं रसपरिपोषणदक्षता चाविक्षता परिदृश्यन्ते। पद्येषु तावदस्य नितरामनन्यसामान्यैव मान्यता विशेषतो धन्यभूयमनुकूलयति।

परमत्र वयं 'यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जन' इति न्यायेन किञ्चिदात्मगतं विवरीतुमिच्छामः। तद् यथा प्रेमविजये रूपके सर्वासां नायिकानामधमपात्राणाञ्च संस्कृतेनैव निबद्धः संवादः। यत्रालङ्कारशास्त्रं नो मैत्रीमनुसन्धत्ते। यच्च नायिकाया वचनमपि सुदीर्घच्छन्दोबद्धं तदपि स्वभावाद् बहिश्चरं समुद्वेजयतीव विपश्चितां चेतस्तत्त्वानि। किञ्च 'गद्यं कवीनां निकषं वदन्ती'त्यस्य सिद्धान्तरूपेण परिग्रहे निःसपत्नकवियशोलाभार्थं श्रीमन्तमत्रत्यगद्यरचनायाः समपेक्षितस्वल्पमात्रसंस्काराय प्रवर्त्तमानं द्रष्टुमभिलषामः। गद्यमयीषु रचनासु पुनरस्य नास्ति किमप्यस्माकं वक्तव्यमिति।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

# SANSKRIT SAHITYA PARISHAT

## 29TH ANNUAL REPORT

The Sanskrit Sahitya Parishat was founded in the year 1916 with the object of propagating Sanskrit language and literature. The programme of work which the Parishat placed before itself from the beginning contained the following :—

(1) Encouraging original Sanskrit composition.

(2) Encouraging the indigenous system of Sanskrit studies and establishing *tols* for that purpose.

(3) Collection of Sanskrit manuscripts and printed books in Sanskrit.

(4) Publication of hitherto unpublished Sanskrit works.

(5) Publication of a monthly Sanskrit journal.

(6) Staging Sanskrit dramas.

(7) Conducting classes for the teaching and propagation of Sanskrit scriptures.

(8) Co-operation with other organisations having similar objects.

The present report contains a summary of the achievements of the Parishat in the above lines during the year under review. The year of the Parishat is the Bengali year, counted from the first day of the solar month of Vaisakh to the last day of Chaitra which also coincides with the Saka year. The present report therefore covers 1351 B. S., *i.e.*, the period from the 14th April, 1944 to the 13th April, 1945.

During the year the Parishat suffered great loss through the deaths of MM. Pandit Pramathanath Tarkabhushan, Prof. Kokileswar Sastri and Sj. Sachchidananda Bhattacharyya.

Meetings—The general meetings and the meetings of the Executive Committee were regularly held. Original Sanskrit compositions were read and discussed in the general meetings and some of these have been published in the Parishat Journal.

Sanskrit teaching—During the year under review Pandit Sitanath Siddhantavagisa and Pt. Ramdhan Bhattacharyya Sastri were engaged in teaching the students in the Parishat *tol*. Besides the regular students, outsiders desirous of special training also had the advantage of their assistance. During the year no less than 44 students including some girl students as well, were coached in different branches of Sanskrit learning. 4 students appeared in Government Examinations and all of them passed. Moreover, one girl student appeared at the Saraswat Samaj Examination and she passed. Our *tol* department received a grant of Rs. 240/- from the Calcutta Corporation and Rs. 120/- from Government as Dearness Allowance during the year.

Library—The Library of the Parishat has been enriched through a regular collection of manuscripts and books available in print. At the end of the year the numbers of printed books and manuscripts were respectively 7304 and 3468.

The rare and rich collections in the Parishat Library are now a source of inspiration to researchers and drew research workers from all parts of the country. The Parishat is now engaged in preparing

and printing a catalogue of its collections but the work is being hampered by financial difficulty. During the year the Parishat received from the Calcutta Corporation a sum of Rs. 500/8/- for its Library.

Publications—Twenty-two unpublished works had already been published by the Parishat. But in this year the publication work of the Parishat has suffered much, firstly through want of funds and secondly through scarcity of paper. Only one work has been brought out, the Devisataka by a well-known classical writer Pt. Krishnanath Sarvabhaum. Another work "Satyanubhava" is being serially published in the Parishat Journal. The author MM. Kalipada Tarkacharyya is a well-known Sanskrit scholar of present days.

Journal—The Paper Control ( Economy ) Order fell very heavily on the Parishat Journal the "Sanskrit Sahitya Parishat" reducing it almost beyond recognition. Considering the special characteristics of our journal and its long-established tradition and status as the only Sanskrit monthly in Bengal it should have in all propriety been exempted from Control in respect of size and pages. However we have approched the Paper Controller, India and are expecting relief in this regard.

Dramas—The staging of Sanskrit dramas has been a regular feature of the activities of the Parishat. It is of immense help in popularising Sanskrit language and literature. Up till now the Parishat has staged no less than 28 Sanskrit dramas and some of them outside Bengal in places like Hardwar, Cawnpur, Benares and Patna with remarkable credit.

Religious Discourse :—Classes in Upanishad and Gita were regularly held during the year.

Parishat Building—The Parishat has secured a piece of land on Raja Dinendra Street through the kindness of the Corporation of Calcutta. The construction of a building was commenced but had to be stopped on account of the abnormal rise in the price of materials and want of sufficient funds. Unless the Parishat is able to shift to its own building its work will continue to suffer. Our appeal now lies to the generous public to help us in completing it without further delay. In this connection we gratefully acknowledge Sir N. N. Sircar's noble donation of Rs. 1000/- to our Building Fund during the year.

General Donations—Of the other helps for our general work that we received during the year the Government grant of Rs. 900/- deserves mention. There was a time when the Government grant to the Parishat was Rs. 3000/- but unfortunately that has been reduced.

In concluding this short report we must again draw the attention of the public to the importance of the work that is being done by the Parishat and appeal to all for generous help and co-operation.

AMARESWAR THAKUR
CHAPALAKANTA BATTACHARYYA
*Secretaries.*

# Sanskrit Sahitya Parishat

## General Fund, 1351 B. S. (1944-45)

| Receipts— | | Disbursements— | |
|---|---|---|---|
| Last year's Balance in Cash & Bank | Rs. 133-14-9 | Monthly Journal— | Rs. 626-6-6 |
| Subscription— | Rs. 1231-12-0 | Library— | Rs. 775-13-9 |
| *Donations* | | Meeting etc.— | Rs. 71-2-0 |
| Govt. Grant (1944-45) | Rs. 900-0-0 | Education Dept.— | Rs. 283-0-9 |
| ,, (D. A.)— | Rs. 120-0-0 | House-rent, etc.— | Rs. 865-11-3 |
| Cal. Corpn. Library Grant (1943-44)— | Rs. 500-8-0 | Salary & Commission— | Rs. 444-10-3 |
| Cal. Corpn. Tol Grant (1943-44)— | Rs. 240-0-0 | Furniture, etc.— | Rs. 38-3-6 |
| From other sources— | Rs. 71-0-0 | Miscellaneous— | Rs. 555-13-3 |
| Sale of Publications | Rs. 112-15-0 | | Rs. 3660-13-3 |
| Miscellaneous— | Rs. 505-5-3 | Balance in Cash & Bank— | Rs. 154-9-9 |
| | Rs. 3815-7-0 | | Rs. 3815-7-0 |

## *Building Fund*, 1351 B. S. (1944-45)

| | Rs. A. P. |
|---|---|
| Last year's Balance | Rs. 12125-3-0 |
| Income | Rs. 1065-11-3 |
| | Rs. 13190-14-3 |
| Expenditure...... | 1149-12-3 |
| Balance | Rs. 12041-2-0 |

*Details of Balance*

| | Rs. A. P. |
|---|---|
| 5% G. P. Note— | 1000-0-0 |
| Central Bank of India (*S.B.* A/c) | 342-15-0 |
| Bengal Central Bank (Current A/c) | 491-6-0 |
| Central Bank of India (Cash Certificates) | 5008-8-0 |
| Bengal Central Bank (Fixed Dep.) | 5000-0-0 |
| Advance to General Fund | 198-5-0 |
| | Rs. 12041-2-0 |

# SANSKRIT SAHITYA PARISHAT



*Executive Committee for 1352 B. S.*

President—M M. Pandit Durgacharan Sankhya-Vedantatirtha.

Vice-Presidents—MM. Pandit Ananta Krishna Sastri. MM. Pandit Kalipada Tarkacharyya. Pandit Dwarikanath Nyaya-sastri. Pandit Taranath Nyaya-Tarkatirtha. Pandit Janakinath Sastri. Dr. Upendra nath Ghoshal, M. A., Ph.D. Dr. Amareswar Thakur, M. A., Ph. D.

Secretaries—Dr. Satkari Mukhopadhyay, M. A., Ph.D. and Sj. Chapalakanta Bhattacharyya, M.A , B.L.

Asst. Secretaries—Sjs. Dinabandhu Sahityasastri. Ramkrishna Chakravartty, M. A. Asoknath Sastri, M. A., P. R. S. Vendantatirtha , Bishnupada Bhattacharyya, M. A., Kavyatirtha, Debendra Chandra Gupta, M A., Sarojendranath Bhanja, M. A., Kavya-Purantirtha

Treasurer —Akshoy Kumar Mitra.

Other Members—Sjts. Kalipada Vidyabhushan. Joganmohan Jyotirvinod. Tridibnath Roy, M.A., B.L. Durgamohan Bhattacharyya, M A. Prabodh Chandra Chattopadhyay, M.A.,B.L. Manoranjan Sankhya-Vedantatirtha. Ramdhan Bhattacharyya Sastri. Bamapada Vidyaratna. Bimalananda Tarkatirtha. Dr Bhupendra Nath Bose, M. B. Sj. Devendranath Mukhopadhyay, M. A., B L. Krishnagopal Goswamy Sastri, M. A.. P. R. S Brahmachari Sadananda. Prakash Chandra Banerjee, B. A. Kartic Chandra Chakrabarti. Hemanta Kumar Tarkatirtha. Ramdhan Smrititirtha. Bankim Chandra Bhattacharyya, M. A., B. L. Basanta Kumar Mitra, B. A Kalidas Roy, B. E , C. E., A. M. I. E Sitaram Sastri. Bijali Mohan Mukherjee, M. A., B. L. Jogendra Mohan Vidyaratna.

---

Acharyya—Pt. Sitanath Siddhantavagis

Auditor—J. C. Chakrabarti, B. Com., G.D.A., R.A.

Sanskrit Sahitya Parishat

17, R. G. Kar Road, Shyambazar Calcutta

Printed at the Bani Press, Calcutta.

Reg. No. C 1073



Vol. XXVIII. August, 1945

No. 4. १८६७-शकीये

२८श-वर्षस्य श्रावणे

४र्थ-संख्या मासे




इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्
(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)
सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः
सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

कालिन्दीसलिलायते सुरपथः श्यामायमानो रुचा
जीमूते स्फुरिता मुकुन्दमिलिता राधेव सौदामिनी ।
तामस्यामभिसारवर्त्मनि पुरो नीपः प्रदीपायते
भेकैस्तारमुरीकरोति रसितं भूषारवं गूहितुम् ॥

मेघो गर्जति वारि वर्षति मुहुः पङ्काकुला मेदिनी
स्रोतःशीर्णतटान्तवर्ति-तरवो मज्जन्ति नद्यां क्वचित् ।
तृप्ताश्चातकयोषितो जललवैरिच्छन्ति नीड़ाश्रयं
वर्षर्त्तुः समुपागतो रतिकरः प्रौढ़ः प्रियासङ्गिनाम् ॥

———

# मतिमञ्जरी

कलिकाताविश्वविद्यालयस्य परीक्षाविधिवैगुण्यम्—

बहोः कालात् प्रभृति वङ्गेषु वङ्गभाषाया विवर्द्धयिषया कलिकाताविश्वविद्यालयः प्रयत्नं कुरुते, येन आङ्गलभाषाप्रतिनिधितया गणितादिग्रन्था अपि वङ्गभाषयैवोपादानभूतया प्रणीता बहुविधनवीनदुरधिगमपरिभाषामयाः शिक्षयन्ति विद्यार्थिनो गणितादिकान् दुरूहार्थान्। तत्पक्षपातिनामियमेका तत्र युक्तिः यथा ;—गणितादिदुरूहार्थशिक्षावसरे तत्साधनीभूता भाषा सैव समुपयुक्ता, यस्याः शिक्षासाधनभूताया अर्थावगमाय पुनस्तदा तदा विद्यार्थिभिः परिश्रमान्तरं नाधेयं स्यात्। तया युक्त्या विविधयुक्त्यन्तरेण च स्वीयप्राथमिकपरीक्षापर्यन्तं शिक्षायां प्राधान्येन वङ्गभाषायाः साधनभावं कलिकाताविश्वविद्यालयः सुतरां बहुमन्यते। परमत्र वयं कलिकाताविश्वविद्यालयस्य प्रयत्नोऽयं दीनयुवत्याः स्वल्पायामवसनाकर्षणन्यायमनुहरतीति पश्यामः। तथाहि श्रूयते अस्मिन्नेव वर्षे वि. ए. परीक्षायां स्वीयविशेषमानपदपरीक्षाविषयेषु विशेषसंख्यालाभेन प्रशस्तपदमधितिष्ठन्तोऽपि बहवः परीक्षार्थिन आङ्गलभाषापरीक्षायामल्पमात्रसंख्यालाभादनुत्तीर्णा इति। तदत्र विश्वविद्यालयीयप्राथमिकपरीक्षापर्यन्तं वङ्गभाषायाः शिक्षासाधनतया परिग्रहेण आङ्गलभाषाव्युत्पत्तेरुत्कर्षविच्छेद एव किं न हेतुतामध्यास्ते ? विशेषज्ञानामस्मिन् विषये सावधानं सर्वतो हितं विचारं कामयामहे।

---

# वृत्तवर्तिका

उपाधिलाभः।—विदितमस्तु परमश्रद्धेय-वाचकमहोदयानां यद् अस्मत्परमसुहृदः कलिकाताराजकीयसंस्कृतमहाविद्यालयस्य आङ्गलविभागीय-प्रधानसंस्कृताध्यापकाः श्रीमन्तो दक्षिणारञ्जनशास्त्रिभट्टाचार्याः पितृलोकश्राद्धतर्पणादितत्त्वावलम्बनेन महार्घं निबन्धरत्नं निर्माय कलि-

कातविश्वविद्यालयात् 'पि. एइच्. डि' इति बहुमानपदं पदं लब्धवन्तः। श्रीमन्तः शास्त्रिणः पाण्डित्ये सौजन्यादिगुणगणेषु च नितरां प्रशस्तिमन्त इति तेषामनेन मानपदलाभेन वयमतिप्रीताः पाण्डित्यादियशःसौभाग्यसमलङ्कृतं तदीयं निरामयं सुदीर्घजीवनमाशास्महे।

---

# अनेक-शब्दः

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

अनेकशब्दमधिकृत्य किञ्चिदुच्यते। ऋग्वेदादिसंहितासु शब्दोऽयं नैवोपलभ्यते, तत्रैकशब्दस्य प्रतिद्वन्द्वितया पुरु-बहु-भूरि-भूयस्-प्रभृतयः शब्दाः प्रयुज्यन्ते। एकं सद्विप्रा बहुधा वदन्ति [ ऋ० सं० १।१६४।४६ ] एको यद् वव्ने भूरेरीशानः [ ऋ० सं० १।६१।१५ ] विश्वस्यैक ईशिषे [ ऋ० सं० २।१३।६ ] एको विश्वस्य भुवनस्य राजा [ ऋ० सं० ३।४६।२ ] भूरीण्येको अप्रतीनि हन्ति [ ४।१७।१९ ] वेषीदेको युधये भूयसश्चित [ ५।३०।४ ] एकः पुरुप्रशस्तो अस्ति यज्ञैः [६।३४।२] इत्यादिश्रुतयोऽत्र प्रमाणम्।

क्रमेण च बहुतरनञ्समाससादृश्येनानेकशब्दस्य प्रादुर्भावः समजनि। आदौ च नञ्समासानामुत्तरपदार्थप्राधान्यात् एकशब्दस्य चैकवचनत्वात् सर्वनामत्वाच्च प्रायेण 'अनेक'शब्द एकवचनान्तत्वेन सर्वनामत्वेन च प्रयुज्यते स्म, प्राचीनैश्च वैयाकरणैः सर्वत्रैवैषा रीतिरनुसृतेति प्रतीयते। अथ गच्छता कालेन तर्कालोचनकर्कशधियाम् अनेकशब्दस्यैकवचनं मूर्धन्य-शब्दस्येव दन्त्यनकारो विप्रतिषिद्धतया प्रत्यभात्। ततश्च लेखकवर्गैः स्वस्वप्रबन्धेषु बहुवचनान्तस्यास्य प्रयोगः प्रारब्धः, छन्दःप्रभृत्यनुरोधेन क्वचिदेकवचनान्तोऽप्ययं प्रायुज्यत। अत एव पुराणेतिहासेषु प्रायेणानेक-शब्दस्य बहुवचन एव प्रयोग उपलभ्यते। महाभाष्ये शाबरभाष्ये च शब्दस्यास्यैकवचनत्वमिति पूर्वप्रबन्धे प्रतिपादितम्, शाङ्करभाष्ये तु बहु-वचनान्तत्वं बाहुल्येन सन्दृश्यते। लौकिकार्यकविषु च प्रथमतो भारविरेव

'पतन्त्यनेके जलधेरिवोर्मयः' [१४।६१] इति विलिखन् व्याकरणस्य प्रातिकूल्यमाचरितवानिति प्रतीयते। अर्वाचीनैर्वैयाकरणैश्च बहुलमभियुक्तैः प्रयुज्यमानस्यास्य शब्दस्यासाधुत्वसङ्कीर्तनात् पराजयमानैः कुशं काशं वावलम्ब्य साधुत्वसम्पादनाय प्रयतितम्। कैश्चिद् बहुव्रीहिः शरणीकृतः, कैश्चित् पुनरेकशेषः कक्षीकृतः। बहुव्रीहौ सर्वनामत्वं न घटते, असमस्तपदविशेषणस्थल एकशेषोऽपि दुर्घटः। सामञ्जस्य-साधनाय व्यक्तिविवेकव्याख्यात्रा रुचकेन यदुक्तं तदेव समीचीनतया प्रतिभाति।तथा च तद्वचनम्—

अनेक-शब्दस्य नञ्समास उत्तरपदार्थप्राधान्यादेकत्वप्रसङ्गः। सत्यम्, किन्तु नञ्प्रयोगविषये एकशब्दस्यैकव्यतिरिक्तवस्तुविषयत्वम्, यथा अब्राह्मण इत्यत्र ब्राह्मणशब्दस्य क्षत्रियादिगोचरत्वम्। एकव्यतिरिक्तं च वस्तु कदाचिदेकत्वोपरक्तं प्रतीयते, कदाचिन्निजेनैव स्वरूपेण। आद्ये पक्षे अनेकमिति भवति, द्वितीये त्वनेकानीति। तथा च पतञ्जलिः— 'प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्' [योगसूत्र ४।५] इति।

चान्द्र-व्याकरणे नञ् [२।२।२०] इति सूत्रस्य वृत्तौ अनेकशब्दमधिकृत्य किमपि नोक्तम्, परं बहुव्रीहिविधायके अनेकमन्यपदार्थे [ २।२।४६ ] इति सूत्रे अनेकमित्येकवचनान्तं प्रयुक्तम्।

जैनेन्द्र-व्याकरणस्य महावृत्तौ यद्यपि अनेकशब्दमधिकृत्य किमपि नोक्तम्, तथापि नञ् [१।३।३८] इति सूत्रस्य वृत्तौ अस्त्युत्तरपदार्थप्रधानेयं वृत्तिरित्युत्तरपदार्थप्राधान्यं स्वीकृतम्। बहुव्रीहिविधायके च 'अन्यपदार्थेऽनेकं वम्' [१।३।८६] इति सूत्रे अनेकमित्येकवचनान्तमेव प्रयुक्तम्।

शाकटायनशब्दानुशासनेऽपि नञ् [२।१।२४] इति सूत्रस्य वृत्तौ अनेकम् इत्येकवचनान्तमेवोदाहृतम्।

इदानीं तेषां तेषां व्याख्यातॄणां मतानि प्रदर्श्यन्ते।

दुर्घटवृत्तौः। कथं पतन्त्यनेके जलधेरिवोर्मयः इति भारविः। तथा अनेकेषां नानास्थानेति न्यासः। उत्तरपदार्थप्रधानत्वान्नञ्समासस्य। एकत्वबुद्ध्या भ्रम इत्यतोऽयमेकशब्द एकस्मिन्निति एकवचनमेव युज्यते।

ज्ञापकं च अनेकमन्यपदार्थे [२।२।२४] इति। तथा च माघः [१९।३६]—'करेणुः प्रस्थितोऽनेको रेणुर्घण्टासहस्रशः' इति। अत एव भागवृत्तिकृता अनेकेषाम् इति जैनेन्द्रोक्तम् [अधिकृत्योक्तम्]—कालदुष्टा एवापशब्दाः इति। रक्षितस्त्वाह—अध्यारोपितबहुत्वाद् बहुवचनम्, यथा द्युद्भ्यो लुङि [१।३।९१], वृद्भ्यः स्यसनोः [१।३।९२] इति। जहद्धर्मत्वाच्छब्द-प्रवृत्तेरिति वा एकशेषेण वा बहुवचनमित्यसाधारणः सिद्धान्तः।

पदमञ्जर्याम्। इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते, मुख्यं तु प्रतिषिध्यते क्षत्रियादाविव ब्राह्मण्यमित्येकवचनमेव भवति, द्व्यादिसंख्या प्रतीयते। तदेवमुत्तरपदार्थप्रधान इति स्थितम्।

तन्त्रप्रदीपे। अनेकमित्येकवचनान्ततोत्तरपदार्थप्राधान्ये सम्भवति, भ्रमवशात् द्वित्र्यादावर्थे एकत्वस्यारोपितस्य नञ्सन्निधौ गम्यमानत्वात् तस्यारोपितस्यैकत्वस्याभिधाता एकशब्दः उपात्तस्वसंख्य एव व्याख्यास्यते। साङ्काश्यं चत्वारि योजनानि इत्युपचार एकवचनम् उपपद्यते। यदा तु अनुपात्तस्वसंख्य एव, यत्रार्थे एकत्वमारोपितं हि द्वित्र्यादौ तद्भेदश्चाश्रीयते, तदा तद्वचनभेदः यथा द्युद्भ्यो वृद्भ्य इति, यथा च मातुलान्य इमा इति। एवञ्च कृत्वा अनेकेन अनेकेषाम् इत्यादयः प्रयोगा जिनेन्द्रादिषु दृश्यमानाः साधवो भवन्ति।

संक्षिप्तसारमतम्। अविद्यमानमेकमेषां ते अनेकाः। भवन्त्यनेके जलधेरिवोर्मयः इत्यत्र किराते अनेके इत्यपपाठः। 'असंख्याः' इति पठनीयम्। [जसित् ६।३०६ पुंसि इति सूत्रे वृत्तिः।]

अनेका इत्यत्राप्यसर्वनामत्वमेव हेतुः, बहुव्रीहेरन्यपदार्थत्वात्। यदा तु न एकः अनेक इति समासः, तदोत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य प्रधानत्वमस्त्येव। किन्तु बहुवचनं न सम्भवतीति, नित्यैकवचनत्वा-देकशब्दस्य। [गोयीचन्द्र-व्याख्या।]

अनेक इति तत्पुरुषानन्तरमेकशेषे तु साधुत्वं भवत्येवेति केचित्। तच्चिन्त्यम्। [वंशीवदनकृता टिप्पनी।]

यथैकं भाजनमसहभुजामनेकेषामुपकारं करोतीत्यत्र अनेकेषामित्यसाधुः। सिरामि ६।३१२ सूत्रे वृत्तिः।

माधवमतम्। भवन्त्यनेके जलधेरिवोर्मय इत्यत्र तु तत्पुरुषस्योत्तरपदार्थप्रधानत्वात्, उत्तरपदस्य च तत्संख्यावाचित्वेनैकवचनान्तत्वाद् बहुवचनमनुपपन्नम् इति 'सेव्यतेऽनेकया सन्नतापाङ्ग्या' [शिशु० ४४२] इति वदेकवचनेन भाव्यम्। एकशब्दस्य द्व्येकयोर्द्विवचनैकवचने [१।४।२२] इत्यादिवद् वृत्तौ भावप्रधानत्वात न विद्यते एकत्वं येषाम् इति बहुव्रीहिणा 'उद्यतैर्निभृतमेकमनेकैः' इतिवद् बहुवचनोपपत्तिः। सिध्यति बहुवचनम्, न बहुव्रीहौ [ १।१।२९ ] इति निषेधात सर्वनामकार्यं शीभावो न सिध्यति। अथवैवं समर्थनीयः—एकशब्दोऽसहायवचनः। अनेके ससहाया इत्यर्थः। तथाच योगपातञ्जले "एकं चित्तमनेकेषाम्" [ ४।५ ] इति प्रयुज्यते।

( क्रमशः )

---

## भ्रमसंशोधनम्

विगतमासस्य पत्रिकासंख्यायां प्रमादेन काचित् त्रुटिर्जाता, श्रीमतां वाचकमहोदयानामवगमाय तां सूचयामः ; यथा—तत्र त्रयोदशसंख्याङ्कितपत्रस्थ-चतुर्दश-पञ्चदशपङ्क्त्योः 'सङ्कलनया द्विशतसंख्यालाभे प्रथमश्रेण्यामुत्तीर्णो भवती'त्यत्र 'सङ्कलनया द्विशतसंख्यालाभे द्वितीयश्रेण्यां चतुःषष्ट्यधिकद्विशतसंख्यालाभे च प्रथमश्रेण्यामुत्तीर्णो भवती'ति भविष्यति।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press. Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17. R. G. Kar Road, Calcutta.

केचिन्नास्तिकधर्माणः सत्यनारायणोत्सवम् ।
प्रसादमात्रभोगार्थं कल्पयामासुरुद्धताः ॥४॥
आस्तिकानां विरोधेन तेऽवदन्नुद्धतिं श्रिताः ।
देवार्थं कल्पितो भोगः स्वभोगाय प्रकल्पते ॥५॥
विना व्याजं न लोकानां सम्भवत्यार्थिको व्ययः ।
अतः किञ्चिदुपाश्रित्य तैरर्थव्यय इष्यते ॥६॥
सन्ति लोके व्रतादीनां येषामाचरणं बहु ।
कृते विचारे तेषां किमैहिकार्थो न केवलः ॥७॥
ब्राह्मणाः शास्त्रदेष्टारः स्वेष्टसाधनतत्पराः ।
ब्राह्मणाधिकृतां पूजामिष्टदां परिचक्षते ॥८॥
दानीया ब्राह्मणा यज्ञे भोजनीयाश्च भोजनैः ।
फलमत्युत्तमं तस्माद्देहिनामुपजायते ॥९॥
इत्येवं परिचक्षाणा मूढाः स्वार्थहता भुवि ।
मूढैरेव हि मान्यन्ते विचारपरिमन्थरैः ॥१०॥
नास्तिकानां तथा वाणीमाकर्ण्य दृढनिश्चयाः ।
आस्तिका विविधैर्वाक्यैस्तद्वचांसि न्यषेधयन् ॥११॥
ततः स जनसङ्घातैर्वणिजो भवनं यदा ।
प्राविशत् सत्यदेवस्य तावत् पूजा प्रचक्रमे ॥१२॥
अपेक्षमाणः पूजान्तं स दूतस्तत्र भक्तिमान् ।
एकान्ते लोकसम्मर्देनालक्ष्यः समवस्थितः ॥१३॥
महिमा सत्यदेवस्य वाचा तत्र प्रचारितः ।
पूजा साङ्गा च सम्पन्ना यथापद्धति सोत्सवा ॥१४॥
सत्यदेवस्य विजयो घोषितोऽभूत् पदे पदे ।
प्रसादं समुपेतेभ्यः पुरोधा व्यतरत्ततः ॥१५॥
निमन्त्रिताः परं तुष्टा यावत्तद्भवनाद् गताः ।
तावदेव सुदेवाख्यो जगाद स कलावतीम् ॥१६॥

वत्से सत्यस्य पूजेयं साङ्गा ते पूर्णतां गता ।
प्रसादैः परितुष्टाश्च बान्धवास्ते गृहं गताः ॥१७॥
अथेदानीं स्वयं मात्रा प्रसादं देवदुर्लभम् ।
गृहाण भक्तियुक्तात्मा सर्वसौभाग्यभाजनम् ॥१८॥
ततः कलावती बाला स्वजनन्या समं तदा ।
प्रसादं परिजग्राह यावत् स्वामिशिवैषिणी ॥१९॥
तावत् स दूतः सम्प्राप्य सन्निधिं प्राह सत्वरः ।
भद्रे लक्षपतिः प्राप्तो नावा शङ्खपतिस्तथा ॥२०॥
यथोपचारं मङ्गल्यं वरणं क्रियतां तयोः ।
समं तौ समपेक्षेते नदीतीरे समुत्सुकौ ॥२१॥
श्रुत्वा दूतस्य तद्वाक्यं प्रहर्षोदयविह्वला ।
कलावती वणिक्पुत्री बभूव स्मरनिर्जिता ॥२२॥
न विवेद कराद्भ्रष्टं प्रसादं भूतलं गतम् ।
वरणद्रव्यसम्भारचयनाय मनो व्यधात् ॥२३॥
कियत्कालमतीत्यैव मङ्गलद्रव्यसम्भृता ।
समं मात्रा नदीतीरं प्रातिष्ठत सुसत्वरा ॥२४॥
सुदेवेन समं देवः सत्यनारायणो विभुः ।
स्मितमन्यैरदृष्टात्मा व्यधत्त सकलेक्षिता ॥२५॥
अन्तः कोपमिव प्रापत स्वप्रसादावहेलया ।
महतामप्यवज्ञानं मनोविकृतिकारणम् ॥२६॥
मूढे कामविदग्धात्मा मत्प्रसादावहेलया ।
पतिं दिदृक्षसे शीघ्रमित्यहो का तवार्थना ॥२७॥
न हि मामभिजानासि तावतापि स्वया धिया ।
दुर्विकारवशं प्राप्ता योग्यं भुङ्क्ष्व फलं ततः ॥२८॥
यदालोकनकाम्या ते मदवज्ञामदीपयत ।
तदालोकनजा प्रीतिस्त्वया नो लघु लप्स्यते ॥२९॥

Reg. No. C 1073



Vol. XXVIII. November, 1945

No. 7. १८६७-शकीये

८म-वर्षस्य कार्तिके

७म-संख्या मासे




इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
आवालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्
(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)
सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः
सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

महीरुहतले महीं धवलयन्ति शेफालिकाः
सितप्रहसिता यथा ललितलोलया बालिकाः ।
अयुग्मदलपादपा विरलपुष्पपर्णान्तराः
ग्रहा जलदविग्रहान्नभसि पूर्णमुक्ता वराः ॥
शरत्समयमाधुरी विधिविधानसन्दानिता
गता परिणतिं पुरः पुरमितः परं प्रस्थिता ।
उदेष्यति तदुत्तरं रुचिरिहैव हैमन्तिकी
सुरम्यशिशिरोदया जयति कापि सा क्षेमिका ॥

ऋतुमासविशेषविवेकः।—भारते वर्षे ऋतुविशेषानधिकृत्य नानाविधा वादाः समासाद्यन्ते। तत्रैक ऋतुद्वयवादः, द्वितीय ऋतुत्रयवादः, तृतीयः पञ्चर्तुवादः, चतुर्थश्च षड्ऋतुवाद इति। प्रथमवादे शीतग्रीष्मावितिद्वावृतू। तत्र कार्तिकादारभ्य चैत्रपर्यन्तः शीतर्तुः, वैशाखादाश्विनपर्यन्तश्च ग्रीष्मर्तुः। द्वितीये वादे कार्तिकमार्गशीर्षपौषमाघाः शीतर्तुः, फाल्गुनचैत्र-वैशाखज्यैष्ठा ग्रीष्मर्तुः, आषाढश्रावणभाद्रपदाश्वयुजो वर्षर्तुरिति। तृतीये वादे 'पञ्चपादं पितरं द्वादशाकृति'मित्यादि-श्रुतिप्रामाण्यमूले हेमन्तशिशिरयोः प्रायेण समानधर्मतयैक्यात् पञ्चैव ऋतव इति। तन्मते ग्रीष्मवर्षाशरच्छीत-वसन्ताः ग्रीष्मवर्षाशरद्धेमन्तवसन्ता वा ऋतव इति सम्भाव्यते। मास-गणना पुनः कया दिशा कुतो वा समारभ्येति न तच्छ्रुतिसाहाय्येन शक्यं निर्णेतुम्। केवलमिदमत्र समभ्युपेतव्यं यत् हेमन्तो वा शिशिरो वा चतुर्मासमय इति अन्यथा बहुव्याकोपः।

वस्तुतस्तु स्मृतिनिबन्धकारः श्रीरघुनन्दनभट्टाचार्य ऋतुविशेषमास-विवरणावसरे स्वमतं दृढीकर्तुं यां श्रुतिं समुदाजहार तया श्रुतेरपि षडृतुवाद एव स्वरस इति प्रतिपद्यते। तदयं पञ्चर्तुवादोऽपि श्रुतिद्वयस्य मिथो विरोधपरिहाराय पञ्चपदस्य लाक्षणिकतया षडृतुवाद एव पर्य-वस्यतीति स्थितम्। स चायं षडृतुवाद ऋतुनामगणनायामेकविधोऽपि तत्त-दृतुमास विशेषविनिर्णये विभिन्नप्रकारः समुपलभ्यते। तथाहि कोषकार-श्रीमदमरसिंहप्रभृतिभिः हेमन्तादारभ्य मार्गशीर्षादियुगक्रमेण एकैकर्तुगणना कृता। यथा हेमन्तः शिशिरोऽस्त्रियाम्। वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः। निदाघ उष्णोपगम उष्ण उष्णागमस्तपः। स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम्। षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्। इति। श्रुतिरप्येनमेवार्थमनुमन्यते। तथा च श्रुतिः 'तप-स्तपस्यौ शैशिरावृतुः, मधुश्च माधवश्च वासन्तिकावृतुः, शुक्रश्च शुचिश्च ग्रीष्मावृतुः। अथैतदुत्तरायणं देवानां दिनम्। नभाश्च नभस्यश्च

वार्षिकावृतुः, इषश्च ऊर्जश्च शारदावृतुः, सहाश्च सहस्यश्च हैमन्तिकावृतुः। अथैतद्दक्षिणायनं देवानां रात्रिरिति। अत्र ऋतुगणनाया आरम्भे हेमन्तमुपेक्ष्य शिशिरस्य परिग्रह इत्येव विशेषः।

लौकिकास्तु वैशाखज्यैष्ठौ ग्रीष्मर्तुः, आषाढ़श्रावणौ वर्षर्तुरित्येवं क्रमेण ऋतुमासगणनामुदाहरन्तः श्रौतमपि सिद्धान्तमन्यथयन्ति। वयं पुनः प्रथमतः प्रभृत्येव श्रौतं सिद्धान्तमनुसरन्त ऋतुविलासनिबन्धनिबन्धनादिव्यापारेषु ऋतुमासविवेकं साग्रहमुररीकृतवन्त इति तेषामवधानाय निवेदयामो, ये तावदस्मदीये ऋतुविलासनिबन्धे लोकसिद्धग्रीष्मादिभावेषु वैशाखादिषु वसन्तादि-कालकान्तिवर्णनामवलोक्य नितरामपरितोषम्पिशुनयन्ति।

---

## वृत्तवार्तिका

विगताश्विनमासस्य त्रयोदशदिवसे सायं सार्द्धषड्वादनतः 'यूनिभार्सिटी-इन्ष्टिटिउट्' इत्याख्य-परिषद्गृहे कलिकाता-महा-नगर्या 'मेयर' इत्याख्य-प्रधाननागरिकपदमध्यासीनानां श्रीयुक्तदेवेन्द्रनाथमुखोपाध्यायमहोदयानामाध्यक्ष्येण संस्कृत-साहित्य-परिषदः सुसम्पन्नः शारदोत्सवसभासमारम्भः। तत्र सभायां वाचितोऽभूदभिनवः कश्चित् पद्यमयो निबन्धः शरत्प्रकृति-षोड़शीसंज्ञः। अन्ते च सभाध्यक्षैरक्षीणवचनदाक्ष्यैरमरवाण्या धन्यभावमनन्यसामान्यमुन्नयद्भिः प्रवर्तितो वीर्यवानभिभाषणवचःप्रपञ्चः समतर्पयदन्तःकरणतत्त्वं परःसहस्राणां सामाजिकानाम्। ततश्च सुप्रसिद्धव्यवहाराजीव-श्रीवङ्किमचन्द्रेण निस्तन्द्रवाचा वितीर्णे सभापतिसाधुवादे समाप्तिमाप सभाकृत्यम्।

ततश्चाभूदमरवाणीमयरूपकाभिनयप्रारम्भः। तत्र प्रथमतः प्राचीन-कवि-भास-प्रणीतं प्रतिमा-नाटकमनन्तरञ्च नवीनकवि-श्रीश्रीजीवभट्टाचार्य-न्यायतीर्थविरचितं सुरोचकं हास्यरसदीपकं रूपकरत्नमभिनीतं नितरां नैपुण्यसङ्घटनया परिषदः सदस्यसङ्घातैः। तत्र तत्र रूपकाभिनये भरत-

दशरथराम रावणसुमन्त्रप्रभृतीनां सुबन्धुवृद्धब्राह्मणविदूषकादीनाञ्च तथा नैपुण्यमुददीपिष्ट, येन तदा तदा मूर्तिमत्येव रसदेवतया स्वायत्तीकृतः प्रत्यभादालिखित इव सर्वतो रङ्गः। कृता च तत्र कैश्चिदात्मानन्दममन्दं निःसन्देहं पिशुनयद्भिः पदे पदे राजतपदकोपहारघोषणापि। प्रारम्भादन्तं यावत् प्रसूनासव इवासौ नवः शारदोत्सवः सबहुमानं सरसोल्लासं सप्रमोदं सविस्मयञ्च सामाजिकैः समनुभूत इति सुमहदेव प्रमोदस्थानं परिषत्सपक्षाणाम्। तदयममेयप्रेयःप्रभवः शारदोत्सवः सबहुमानमानमस्य रसिकचेतांसि सुदीर्घेणायुषा समेधमानो मानोन्नतानामेकतानं सुखभानं विधेयादिति नानाविधवैधविधानेन भगवन्तं विधिमर्थयामहे। इति शम्।

---

## नवीनग्रन्थविमर्शः

कलिकातास्थ-राजकीय-संस्कृतमहाविद्यालये साङ्गवेदाध्यापकपदमलंकुर्वद्भिः श्रीमद्भिर्वेदरत्नोपाधिक-देवानन्दझा-शर्मभिरुपायनीकृतं स्वप्रणीतं निघण्टुवेदकोशो नाम पद्यमयाभिधानरत्नं समधिगतमस्माभिः। तत्र च प्रवीणतमेन वैदिकपण्डितशिरोमणिना आदावभ्याससौकर्यं बुद्धौ धारणसौकर्यं यथावसरं स्मरणसौकर्यञ्च श्लोकानामाकलयता निघण्टुसंगृहीता वैदिकशब्दास्ततः समाहृत्य वेदार्थालोचनसमुत्सुकानां छात्राणां विदुषाञ्चोपकृतये श्लोकैरुपनिबद्धाः।

सुपरिशीलितोऽपि स्वाध्यायेन निरन्तरमुच्चैः श्रुतिसन्तानः फलसिद्धावर्थविज्ञानं साधनतया समपेक्षत इति नेदं तिरोहितं कस्यापि। तच्चेदानीन्तनानां सुबहु श्राम्यतामपि निघण्टुसमाश्रयणमन्तरेणासम्भवम्। निघण्टोश्च साम्प्रतिका ग्रहणधारणपठनपटवोऽपि वटवो नितरां पराजयमाना लक्ष्यन्ते, तत्तेषामाभिमुख्याय तस्येयं पद्यमयी मूर्तिः कटुभेषजभोजनायेव प्रकल्पिता काचन रमणीया शैली नूनमुपयोगमतिमहान्तमावहन्ती सममेव कर्तुः कीर्त्या चिरं वर्तिष्यमाणा भुवनहितं साधयिष्यतीत्याशास्महे।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

यावत् परिकरं बद्ध्वा त्रयस्ते तोयमज्जने ।
संकल्पं व्यदधुस्तावदभूदाकाशभारती ॥८२॥
साधो विरम वैक्लव्यात्तोयमज्जनसाहसात् ।
निवर्तय सुतां पत्नीं विपत्तेः कारणं शृणु ॥८३॥
पत्यागमनसन्देशं शृण्वती कामनिर्जिता ।
सत्यप्रसादं हस्तस्थं भूमावेषा न्यपातयत् ॥८४॥
सुदेवोऽहश्च तद्वृत्तमपश्यात्र न चापरः ।
सुदेवस्तोत्रसन्तुष्टः प्रतीकारं वदामि वः ॥८५॥
एषा कलावती बाला प्रतिगत्य पुरं पुनः ।
प्रसादं यदि गृह्णीयाद् विपत्तेस्तर्हि निष्कृतिः ॥८६॥
समं शङ्खपतिर्नावा यथापूर्वं स्वसम्पदा ।
उन्मग्नो भविता वाढं जनैरनुगतैस्तथा ॥८७॥
सत्यदेवावहेलायाः फलं प्राप्तं पदे पदे ।
तथापि विकृतं चित्तं चित्राय मम कल्पते ॥८८॥
प्राक्तनादृष्टजा भावा मानसं दूषयन्त्यलम् ।
तन्मनोऽधिष्ठितं तावदिन्द्रियं कृत्यसाधनम् ॥८९॥
भोगात् प्राक्तनपापं वः परिक्षीणमभूत् पुरा ।
इतः प्रभृति सौभाग्यभानोरुदय ईक्ष्यते ॥९०॥
मया शङ्खपतिस्तोये सर्वैः सह सुरक्षितः ।
न तस्य हानिः स्वल्पापि सर्वसौख्ये निषेदुषः ॥९१॥
भूयोऽपि स्मारयामि त्वां हितं परिजनान्वितम् ।
नो सत्यविस्मृतिश्चित्ते कदापि समुपास्यताम् ॥९२॥
एष नक्तन्दिवं देवः सत्यनारायणाभिधः ।
जागर्त्ति स्वप्रचारैषी भक्तानां हितकारणम् ॥९३॥
पुत्रीं सान्त्वय गच्छ त्वं सत्वरं सत्यमन्दिरम् ।
प्रसादं ग्राहयाबाधं ततो भूयाद् विपत्क्षयः ॥९४॥

दैववाणीं समाकर्ण्य गृहीतार्थास्त्रयस्ततः ।
सत्वरं स्वजनैः सार्द्धं स्वपुरं समुपाययुः ॥९५॥
तत्रापश्यन्नुपासीनं सुदेवं सत्यभाविनम् ।
वहिरासङ्गनिर्मुक्तं मुनिं ध्यानपरं यथा ॥९६॥
प्रणिपत्य ततो भक्त्या सत्यनारायणं विभुम् ।
प्रसादं भूमिसंलग्नं भक्त्यादत्त कलावती ॥९७॥
प्रार्थयामास सा भव्यं सत्यनारायणान्तिके ।
देवोपम-सुदेवस्य पदे चापि नताभवद् ॥९८॥
कलावत्या नतो विप्रः सुदेवो ध्यानमाजहत् ।
प्राह तां पतिशोकार्तां वत्से जहिहि शोचनाम् ॥९९॥
एष नारायणो देवः स्वप्रसादावहेलया ।
पुरा कोपवशं प्राप्तः साम्प्रतं तोषमासदत् ॥१००॥
एहि भूयो नदीतीरं पतिं द्रष्टुं पतिव्रते ।
नीरादुन्मज्ज्य कान्तस्त्वां समं नावा व्यपेक्षते ॥१०१॥
इत्युक्त्वा सहितः सर्वैः सुदेवः सरितस्तटम् ।
प्रतस्थे सत्यदेवस्य गुणान गायन पदे पदे ॥१०२॥
नदीतीरं क्रमेणाप्ता विलुलोके कलावती ।
स्वामिनं स्वजनैः सार्द्धं तर्यां सर्वशिवाश्रयम् ॥१०३॥
नत्वा सत्यं हृदा भक्त्या साधुर्दारसुतान्वितः ।
सुदेवं पुरतः कृत्वा सत्वरं नावमासदत् ॥१०४॥
दृष्टिमात्रेण सम्भ्रान्तो वणिक् शङ्खपतिस्ततः ।
तर्या वतीर्य पादान्ते सुदेवस्य नतोऽभवत ॥१०५॥
स्थापयित्वा करं शीर्षे सुदेवस्तं वणिक्सुतम् ।
आशिषावर्द्धयत् सत्यमहिमानमुदीरयन ॥१०६॥
क्रमेण श्वशुरं नत्वा श्वश्रूश्चापि प्रसूसमाम् ।
तदीयानन्दवाष्पाम्बुधाराभिः स प्लुतोऽभवत ॥१०७॥

सत्यस्य कृपया तात प्राप्तोऽसि निरुपप्लवः ।
इत्युक्त्वा वणिजामीशः पर्यष्वजत तं मुदा ॥१०८॥
श्वश्रूः शीर्षमुपाजिघ्रत्तस्य स्नेहाप्लुतान्तरा ।
सुखं तात चिरञ्जीव सत्यभक्त्येति चावदत ॥१०९॥
लोकातीतसमुत्कण्ठाव्याकुलापि कलावती ।
स्मरन्ती लौकिकाचारं विजिग्ये कामनामदम् ॥११०॥
गुरुपुत्रसमाचारे समाप्ते निरुपप्लवे ।
प्राप्तावकाशः प्रेमात्मा मानसो भाव उज्ज्वलः ॥१११॥
ततः कलावती कान्ता विच्छेदाग्निपरीक्षिता ।
सत्त्वमूर्त्तिरिव प्रापत् पत्युः पादाब्जसन्निधिम् ॥११२॥
साध्वीं सर्वगुरोः पत्युश्चरणाम्बुरुहद्वयम् ।
आनन्दजाश्रुभिः सिक्त्वा निजं भावं न्यवेदयत ॥११३॥
अजस्रमश्रुधाराभिः पादसेकं प्रकुर्वतीम् ।
प्रेम्ना कलावतीं कान्तामुदस्थापयदर्यकः ॥११४॥
निजगाद प्रियां मुग्धामथ शङ्खपतिः प्रियः ।
प्रिये दिष्ट्यासि सम्प्राप्ता समुत्तीर्णमहाभया ॥११५॥
सत्यं स्मर चिरं भक्त्या यत्फलं सर्वसम्पदः ।
विपत्तिं वयमुत्तीर्णाः सर्वां तस्यानुकम्पया ॥११६॥
तदेहि भवनं गत्वा सर्वं वृत्तं सविस्तरम् ।
कथयिष्यामि काले त्वां नायं कालोऽस्ति विस्तृतेः ॥११७॥
एवं नानावचोभङ्गीमङ्गीकृत्य वणिग्जनाः ।
प्रातिष्ठन्त वणिग्गेहं सत्यस्य जयघोषणैः ॥११८॥
सुदेवाख्यं पुरस्कृत्य विप्रं सत्यप्रियं चिरम् ।
पत्नीप्रभृतिभिः साकं यातो लक्षपतिर्गृहम् ॥११९॥
नवीनं स्वपुरं दृष्ट्वा स वणिक् प्रियदर्शनम् ।
लोकातीतप्रमोदानामाश्रयोऽभूत पदे पदे ॥१२०॥

प्रविश्य भवनं सर्वे भक्तियुक्तेन चेतसा ।
सत्यस्य स्तुतिभिः सर्वा दिशो मुखरिता व्यधुः ॥१२१॥
जयाघोषणयाहूता विस्मिताः प्रतिवेशिनः ।
तत्रागत्य स्तुतौ तस्यां साहायकमशिश्रियन् ॥१२२॥
सत्यस्तुतिपदैर्गीतैरशेषा सा निशागमत् ।
कुटुम्बगणसंवादैर्वृत्तवृत्तान्तगोचरैः ॥१२३॥
सत्थः सन्तोषमासीदद् दुरदृष्टमपासरद् ।
हृष्टा वैश्यजनाः सर्वे दीर्घं कालमजीगमन् ॥१२४॥

समन्ततः सत्यगुणप्रचाराद्
गृहे गृहे सत्यसमर्च्चनाभूत् ।
कलिप्रभावः क्षयमाप कामं
सत्यानुभावः समदीपि लोके ॥१२५॥

जगति गतिविहीने भातु सत्यानुकम्पा
शिवमशिवविरोधं तत्प्रभावाद् विधत्ताम् ।
लयमयतु विषादः सत्यभक्तेषु नित्यं
जयति जयति देवः सत्यनारायणात्मा ॥

मुनिरसाष्टसुधाकरसम्मिते
बहुविपत्तिभृते शकहायने ।
रचितपूर्वमपूर्वमिदं चिरा-
न्निरवशेषमविन्दत मुद्रणाम् ॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे
महाकाव्ये वणिजः सर्वविपत्परिमोक्षो
नाम चतुर्विंशः सर्गः ॥२४॥

समाप्तोऽयं ग्रन्थः ॥

Reg. No. C 1073



Vol. XXVIII. December, 1945

No. 8. १८६७-शकीये

२८श-वर्षस्य अग्रहायणे

८म-संख्या मासे




इयं संस्कृत-साहित्य-परिषन् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्
(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)
सम्पादकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः
सह-सम्पादकः—श्रीहेमन्तकुमारतर्कतीर्थः

## ऋतुविलासः

नीहारधौतमकरन्दरसोपचारा
बल्ली विलुप्तमधुपावलिनीलहारा ।
क्षेत्रावली शबलशस्यचयोपवीता
क्षौणी नवेव सहसा नवजातशीता ॥

अवसिता शरदः सुरवन्दना
प्रतिगता विजया जयशोभना ।
तदुपदिष्टसदिष्टसमन्वयं
वहतु वर्षमिदं जगदव्ययम् ॥

# मतिमञ्जरी

विजयाभिभाषणम् ।—श्रीमन्तः परिषद्बान्धवाः! विगतवर्षवदेव नातिप्रहर्षेण सङ्घशक्त्या व्यक्तिशक्त्या च साकल्येन निर्वृत्तः शारदसमर्चनाप्रचयजन्मा मर्त्यमहोत्सवो देवतानाम्। तदद्य सकलशारदपूजामहोत्सवावसाने सर्वतो लब्धविजयां विजयामनुस्मरन्तो गुरूणां सपादपतनं प्रणतिपर्यायेण सुहृदां सकण्ठग्राहमालिङ्गनेन स्नेहास्पदानां सहशीर्षस्पर्शमाशिषां प्रयोगेण परेषाञ्च निरुपाधिकक्षेमाभिलाषेण सभक्तिकं सप्रणयं सस्नेहं सानन्दञ्च विजयाभिनन्दनं निवेदयामः। सहैव च श्रीमतां पुरतः किञ्चिदपरमनुषङ्गायातमुपस्थापयामो यदिदानीं प्रायेण प्रतिवर्षमेव पूजामहोत्सवप्रारम्भे विशेषतः समुदेति नः स्वान्तेषु। तथाहि पुरा गृहस्थानां गृहेषु वैयक्तिकशक्तिसाध्यायाः पूजाया यथा बाहुल्यमवर्तिष्ट, नास्ते साम्प्रतं तथा। सम्प्रति तु वैयक्तिकशक्तिसाध्यपूजापेक्षया परिलक्ष्यते सङ्घशक्तिसाध्यायाः पूजाया उत्तरोत्तरं प्रतिवर्षमत्याधिक्यम्। या किल सार्वजनीनपूजेति व्यपदिश्यते। तदत्र गृहस्थगृहेषु वैयक्तिकशक्त्या निष्पद्यमानायाः पूजायास्तथा सङ्घशक्त्या निष्पद्यमानायाः सार्वजनीनपूजायास्तारतम्यविचारे श्रीमतां चेतः सञ्चारयितुमिच्छामः। वयमत्र केवलं दिङ्मात्रमुदाहर्तुं प्रवर्तामहे।

तथाहि स्वगृहेषु प्रवर्तमानायां पूजायां यथा गृहस्थानामात्मीयताबुद्धिप्रभवो बलवानाग्रहो भवति, प्रत्यङ्गं साभिनिवेशं सिषाधयिषा समुदेति, तस्याः साङ्गतया निष्पत्त्या च सानन्दः कल्याणसमाश्वासो मानसमधितिष्ठति, परिजनादिषु च प्रबुध्यते निर्मलः स्वान्तप्लावी प्रमोदमहिमा, न तथा भागशो बहुव्यक्तिसाध्यसार्वजनीनपूजायाम्। किञ्च आन्तरिको भक्तिरेव प्रधानोपकरणं देवतार्चनव्यापारे। तया यथाशक्ति प्रवर्तितो देवतार्चनसमारम्भ एव वृणीते सफलताम्। बाह्यमहोत्सवसमारम्भमात्रेण तु नायं सफलो भवति। गृहेषु प्रवर्तमानायां पूजायां सेयं बहुत्र

भूयसी किलानुभूयते। सार्वजनीनपूजायां पुनस्तामिमां विजयमानो बाह्य-महोत्सवारम्भ एव सुदृढं पदं करोति। सा हि नार्चकस्य तपोयोग-मर्चनस्यातिशायनं प्रतिमासु बिम्बानामाभिरूप्यं वा समपेक्षते,—येन येन प्रतिमासु देवतानां सान्निध्यं सम्भवति। प्राचीने काले देवताप्रतिमास्तत्त-द्देवताध्यानाद्यनुसारेण घटिताः सर्वत्र प्रायेण समानरूपाः समजनिषत। साम्प्रतं पुनर्ध्यानाद्यनुवृत्तिपरिहारेण प्रतिस्वं भिन्नरुचीनां लोकानां रुचि-मनुवर्तमानैः कुलालैरनल्पशिल्पप्रशस्तिसम्पिपादयिषया सङ्घटिताः प्रतिमाः प्रायेण प्रतिपूजामण्डपं विभिन्नरूपाः प्रतिभासन्ते, येन भक्तानां दर्शकानां चित्तभूमावेकेनान्यस्य रूपस्य प्रतिक्षेपात् क्वापि रूपे चित्तं स्थैर्यं नासा-दयति। तेन च देवतारूपगोचरदृढ़तरध्यानमपि विघटमानं कथमिव तेषा-मपरिमितं हितं विदध्यात्। नानाविधबाह्याड़म्बरसम्भारसम्भूतविष-मोपन्यासेन च क्वचित् प्रज्वलन्ती वह्निज्वाला सर्वमुत्सवसाधनमेकपद एव निःशेषं भस्मीकुरुते, क्वचित् पर्वतपृष्ठमधितिष्ठन्त्यां दैवतमूर्तौ प्राण-प्रतिष्ठाद्यर्थं पुरोधसा दृढ़मकामेनापि स्वपादेन दैवतासनमाक्रान्तं भवति। मर्दलनादपरिभाविजनसम्मर्दजनितकोलाहलव्याकुलतया च प्रतिहन्यते पुरो-धसामेकाग्रतापि, या दैवतपूजायामत्यर्थमुपयुज्यते। एतत् सर्वं सार्वजनीन-पूजास्वेव सुतरामात्मलाभं करोति। यावदेव वृद्धिं गतः समाजेषु सार्व-जनीनपूजाव्यापारस्तावदेव क्रमेण स्वल्पतामाशिश्राय गृहस्थानां वैयक्तिक-शक्तिमात्रनिर्वाह्यदैवतपूजाप्रवृत्तिः। तेन च तत्तद्गृहस्थानां दरिद्राः पुरोधसो दीनाः प्रतिवेशिनोऽपि सुमहतीं हानिं प्रत्यपद्यन्त। अर्थनीति-प्रयोगस्य साफल्यमुदीक्षमाणैस्तरुणवयोभिस्तन्नियन्तृभिश्च अर्थनीत्यादि-निष्णातगरिष्ठजनाधिष्ठितसमुद्बोधनसभाद्यनुष्ठाने विविधवस्तुसम्भारो-पस्कृतविपणिसमावेशादिकृत्यकलापे च दृढ़ं निविष्टदृष्टिभिः कथमिव यथा-पेक्षं पूजायां मतिः शक्या प्रवर्तयितुम्।

अर्थनीतिमधिकृत्य विचार्यते चेत् सार्वजनीनपूजाया भूयानुपयोगः सिद्धान्तशय्यामधिशेते। परमर्थनीतिरेका, धर्मनीतिश्चापरा, सनातनधर्मिणा-

मेष एव हि महान् विशेषः। सोऽयं तिरोहितश्चेत् सनातनधर्मिणः सुतरामात्मनैव वियुज्येरन्। गृहपूजानामविरोधेनार्थनीत्यनुकूलतया सार्वजनीनपूजामहोत्सवे न वयं प्रतिपक्षाः, किन्तु तद्विरोधेन तत्समारम्भे। यतो गृहपूजायामस्ति कश्चिद् विशेषो यः सार्वजनीनपूजायां नास्ते। तद् गृहपूजाया विलोपे लब्धुमशक्यतया तद्विशेषस्य सत्रे एवायं समाजः सुमहतः क्षेमाद् विच्यवेत। यच्च 'सङ्घशक्तिः कलौ युगे' इति कलियुगे सङ्घशक्तिप्राधान्यप्रतिपादकं वचनं तदर्थनीतिविषयं, न तु धर्मनीतिपरम्। देवतार्चनादिधर्मानुष्ठानानामपि अर्थनीतिमात्राङ्गत्वे जितं लौकायतिकसिद्धान्तप्रजापतिभिरिति शम्।

---

# कालिदासस्य कुसुमप्रियत्वम्

[ निबन्धिका—सिंहोपनाम्नी श्रीवाणी ]

काव्यजगति ये तावत् कवय आभरणैर्विचित्रैर्योषिज्जनानलमकुर्वन्, तेषु कालिदास एव अनाड़म्बरः सरलमार्गानुयात्रिकः। प्रायशः काव्यनायिकानामलङ्करणानि काञ्चनेन महार्घरत्नादिना वा न तेन सम्पादितानि, तस्य वर्णनासु विलोकयामस्तावत् प्रकृत्युपहृतानि कुसुमानि अलङ्करणस्थानगतानि। रचनानैपुण्येन तथा भाषणनैपुण्येन तान्येव गौरववन्ति भूषणानीव प्रतिभान्ति अप्राप्यसमतसन्निधौ। तथाहि मेघदूतकाव्ये प्रियाविरहिणो गुह्यकात् श्रुतमेवं यद् अलकानगर्यां समन्तत एव रत्नानि वर्तन्ते, तत्रत्याः कन्यकाः सुवर्णवालुकाभिस्तथा मणिभिः संक्रीड़न्ते, तथापि कविना तादृशीनामपि रमणीनामलङ्करणे व्यवहृतानि विविधानि कुसुमानि। तथाचोत्तरमेघे—

"अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः।
संक्रीड़न्ते मणिभिरमरप्रार्थिता यत्र कन्याः" ॥ श्लो० ६ ॥ इति।

एवं यत्र रत्नमयाः प्रदीपा ध्वस्तान्धकारा विराजन्ते, तत्र नार्यः कल्पवृक्ष-प्रसूतं मण्डनं व्यवहरन्ति। तथाचोत्तरमेघे—

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान्।
लाक्षारागं चरणकमलन्यासयोग्यश्च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ श्लो० १३ ॥ इति।

इमास्तावत् अलकावासिन्योऽबलाः सर्वा एव धानिककन्यकाः। विचेयेन काञ्चनाभरणेन एतासामङ्गेषु मण्डितेषु कविर्न गर्हाभाजनत्वमेति इति वितर्कयामः। परं स तस्य गूढानुभूत्या इदमेव सम्यगुपलक्षितवान यत् स्पृहणीयैरपि रत्नालङ्कारैः नास्त्यत्र मनागपि वैशिष्ट्यं नवीनत्वं वेति।

तत्रभवान् कविः कालिदासः प्रकृतिप्रिय आसीत्। अतः प्रकृतेः सौन्दर्यं स्वान्तरेणोपलब्धुं शशाक। स खलु मनीषी मकरध्वजान्तकस्याश्रमं गच्छन्त्याः पार्वत्या भूषणवर्णनायां हीरकादिरत्नराजीनां सहायतां नाशिश्राय। इयं हि पार्वती गिरिराजस्य दुहिता। गिरिराजश्चानन्त-रत्नप्रभवत्वेन ख्यात आसीत्, "अनन्तरत्नप्रभवस्य यस्य" इत्यादिना तेनैव कुमारसम्भवाख्ये काव्ये प्रतिपादितत्वात्। काञ्चनाभरणानां तथा माणिक्यादिरत्नानां दैन्यं तस्य नासीत्। परं कविनाऽमन्यत, यत् गौरी रत्नखचितकाञ्चनाभरणमण्डिता यादृशी मनोहारिणी पुष्पाभरण-परिशोभिताङ्गी ततोऽप्यधिकं चित्तग्राहिणी भवेत्। अत एव जितेन्द्रिय-स्यापि नटराजस्य चित्तविमोहनाय कविरुमां प्रसूनैरलङ्कृतवान्।

( क्रमशः )

---

# व्यक्तिविवेकः

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

भारतमित्रेण म्याक्सूमूलरमहोदयेन प्राचीन-संस्कृत-साहित्यस्येतिवृत्तग्रन्थे (History of Ancient Sanskrit Literature ed. Panini office, p. 83) विलिखितम्—The distinction of gender is the only point on which the Greeks may claim a priority to the Hindus. It was known in Greece to Protagoras, whereas in India the Pratisakhyas seem to have passed it over, and it appears first in Panini. "लिङ्गविवेकः खल्वेक एव विषयो यत्र ग्रीस्देशनिवासिनो भारतवर्षीयेभ्यः प्राथम्यमधिगन्तुं प्रभवेयुः। ग्रीस्भूभागे *प्रोटागोरास्-महोदयस्याप्ययं विदित आसीत्, भारते पुनः प्रातिशाख्येष्वेष परित्यक्त इति प्रतिभाति, प्रथमतश्चायं पाणिनीय एव प्रादुर्भवति।"

एतदस्माभिर्लेशतोऽपि नानुमन्यते। ऐतरेयशतपथादिब्राह्मणेषु पुंलिङ्गार्थे वृषन्शब्दस्य स्त्रीलिङ्गार्थे च योषा-शब्दस्य पुनः पुनः प्रयोग उपलभ्यते। तथाहि—वृषा वा ऋषभो योषा सुब्रह्मण्या [ २६।३ ] इति। ऐतरेयारण्यकेऽपि 'वृषो वै प्रेङ्खीयोषासन्दी' [ १।२।४ ] इत्यत्र तस्मिन्नेवार्थे तयोः शब्दयोः प्रयोगो दृश्यत एव। पाणिन्यादिग्रन्थेषु ये तावत् पुंस्त्रीनपुंसकशब्दाः प्रयुज्यन्ते ते सर्वेऽपि शतपथब्राह्मणे समुपलभ्यन्ते—

यदस्मिंस्त्रेधा विहिता इष्टका उपधीयन्ते—पुन्नाम्न्यः स्त्रीनाम्न्यो नपुंसकनाम्न्यः। त्रेधा विहितान्यु एवेमानि पुरुषस्याङ्गानि - पुन्नामानि स्त्रीनामानि नपुंसकनामानि।......ता उ सर्वा इष्टका इत्येवाचक्षते—

---

* ग्रीकृतत्त्वज्ञः प्रोटागोरास्-महोदयः ख्रिस्तजन्मतः प्राक् पञ्चमे शतके प्रादुर्बभूवेत्यैतिहासिकाः। तेन हि पुंस्त्रीनपुंसकलिङ्गप्रतिपादनार्थं क्रमेण arren ( वृषा ) thelus ( योषा ) skeues-शब्दाः प्रयुयुजिरे।

नेष्टक इति, नेष्टकमिति। वाचो रूपेण। वाग्घ्येवैतत सर्वम्—यत स्त्री पुमान नपुंसकम। [ १०।५।१।३ ] इति।

किञ्च देवासुराख्यायिकातोऽपि प्राचीनानां लिङ्गविवेकज्ञानं विशेषतः स्फुटीभवति। तथा च शतपथब्राह्मणे श्रूयते—

"देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। ते दण्डैर्धनुर्भिर्न व्यजयन्त। ते हाविजयमाना ऊचुः—'हन्त वाच्येव ब्रह्मन विजिगीषामहै, स यो नो वाचं व्याहृतां मिथुनेन नानुनिक्रामात, स सर्वं पराजयातै, अथ सर्वमितरे जयान' इति। 'तथा' इति देवा अब्रुवन। ते देवा इन्द्रमब्रुवन्—'व्याहर' इति।

स इन्द्रोऽब्रवीत—'एको मम' इति। अथ—'अस्माकमेका' इतीतरेऽब्रुवन। तदु तन्मिथुनमेवाविन्दन। मिथुनं हि—एकश्च एका च।

'द्वौ मम' इतीन्द्रोऽब्रवीत। अथ 'अस्माकं द्वे' इतीतरेऽब्रुवन। तदु तन्मिथुनमेवाविन्दन। मिथुनं हि—द्वौ च द्वे च।

'त्रयो मम' इतीन्द्रोऽब्रवीत। अथ 'अस्माकं तिस्रः' इतीतरेऽब्रुवन। तदु तन्मिथुनमेवाविन्दन। मिथुनं हि—त्रयश्च तिस्रश्च।

'चत्वारो मम' इतीन्द्रोऽब्रवीत। अथ 'अस्माकं चतस्रः' इतीतरेऽब्रुवन। तदु तन्मिथुनमेवाविन्दन। मिथुनं हि—चत्वारश्च चतस्रश्च।

'पञ्च मम' इतीन्द्रोऽब्रवीत। तत इतरे मिथुनं नाविन्दन। नो ह्यत ऊर्ध्वं मिथुनमस्ति। पञ्च-पञ्चेति ह्येवैतदुभयं भवति। ततोऽसुराः सर्वं पराजयन्त, सर्वस्माद् देवा असुरानजयन।" [ १।५।४।६-११ ]। इति

'लुपि युक्तवद् व्यक्तिवचने' [ १।२।५१ ] इति पाणिनीयसूत्रस्य काशिकायां जयादित्येनोक्तम्—'व्यक्तिवचने इति च लिङ्गसंख्ययोः पूर्वाचार्यनिर्देशः, तदीयमेवेदं सूत्रम्' इति। अतोऽपि, पाणिनेः पूर्वेषामपि लिङ्गविभागः परिचित इति विस्पष्टमेव प्रतीयते।

बृहद्देवतायामप्युक्तम् [ २।६६-६७ ]—

त्रीण्येव लोके लिङ्गानि पुमान् स्त्री च नपुंसकम् ।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥
तेषां तु नामभिर्लिङ्गंग्रहणं सर्वनामभिः ।

इति । परं बृहद्देवतायाः पाणिनेः पूर्वभावित्वे गरीयान् संशयो वर्तते ।

---

## मधुसूदनसरस्वती

खृष्टाब्दीये द्वादशशतके त्रयोदशशतके वा नानाशास्त्रनिष्णातः श्रीराममिश्रो यवनैरुपद्रुतः स्वजनैः समं स्वात्मस्वधर्मयोः संरक्षणाय कान्यकुब्जविषयादभ्याजगाम नवद्वीपभूमिं बङ्गविषयमूर्द्धन्यभूताम् । ततस्ततोऽपि निरापत्तामभिसन्धाय प्रचितसत्तां तदानीन्तनचन्द्रद्वीपमण्डलमण्डनायमानं बहुलनदीखातक्षेत्रसुपरित्रातं वैरिदुराक्रमं कोटालिपाटपत्तनमाशिश्रियत् सबहुमानम् । स एव महापुरुषो मूलम् कोटालिपाटपत्तनवास्तव्यसमग्रयजुर्वेदिकाश्यपगोत्रस्य सनातनधर्मानुकूलसकलसमुदाचारपात्रस्य । तथाह्येके वदन्ति ;—श्रीराममिश्रान्माधवः, माधवात् सनातनो गणपतिश्च, गणपतेरेव नामान्तरं गुणार्णवाचार्य इति, तस्माच्च प्रमोदनाख्यः पुत्रो जज्ञे, यो विद्याकृतं पुरन्दराचार्य इत्युपनाम दधानः पप्रथे । अन्ये च समामनन्ति यथा ;—श्रीराममिश्रान्माधवमिश्रः तस्माद् गोपालमिश्रः तस्माद् गणपतिमिश्रः तस्मात् सनातनमिश्रः तस्मात् कृष्णगुणार्णववेदाचार्यः तस्माच्च प्रमोदनपुरन्दराचार्यो नाम कोटालिपाटवास्तव्य-यजुर्वेदीयकाश्यपगोत्रजानामान्तरालिकमूलपुरुषो जनिं लेभे । तदनयोर्द्वितीयमेव मतं समीचीनं मन्यते । यतः पुरन्दराचार्यवंशप्रसूतेषु केचिदात्मधारावर्णनावसरे श्रीराममिश्रधारेति, केचिच्च सनातनमिश्रधारेति व्याचक्षाणा उपलभ्यन्ते । प्रथमकल्पपरिग्रहे सनातनो गणपतिश्चेति द्वयोर्भ्रात्रोः गणपतेरेव

सन्ततिधाराघटकत्वेन सनातनस्य च तदघटकत्वेन सनातनधारां वर्णयितारः पौरन्दराः सुतरां व्याहतवाचः पराभूयन्ते। द्वितीयकल्पपरिग्रहे तु न तथा। मधुसूदनसरस्वतीनामा यतिपुरन्दरस्तस्य पुरन्दराचार्यस्य कनीयान् सोदर इति केचिद् व्याहरन्ति। केचिच्चान्ये तममुं पुरन्दराचार्यस्य तनूजन्मानमाचक्षते। वयमत्रापि द्वितीयमेव मतं समीचीनं मन्यमानास्तदनुसारेणैव वृत्तपञ्जीमनुवर्तिष्यामहे। नानाविधप्रमाणोपष्टम्भेन खृष्टाब्दीय-पञ्चविंशत्युत्तरपञ्चदशशतकवर्षकालात् प्रभृति खृष्टाब्दीय-द्वात्रिंशदुत्तरषोड़शशतकवर्षकालपर्यन्तः श्रीमधुसूदनसरस्वतीदण्डिस्वामिनो जीवितकालः प्रायेण व्यवतिष्ठते। तदा कोटालिपाटपत्तनं पूर्ववङ्गीय-चन्द्रद्वीपमण्डलान्तर्गतं वव्रृते। चन्द्रद्वीपमण्डलञ्चैतत् तदानीं प्रथितप्रतापेन राज्ञा कन्दर्पनारायणेन समधिष्ठितमासाञ्चक्रे, दिल्लीमधितिष्ठता च सार्वभौमेण आकबरेण समग्रं भारतवर्षम्।

प्रमोदनपुरन्दराचार्यस्य प्रथमात्मजेन श्रीनाथेन द्वितीयात्मजेन च श्रीयादवेन समलङ्कृते गेहे तृतीयो वह्निरिव तृतीयं दैवतमिव च पुण्ये समये जनिमुपजगाम श्रीमधुसूदनो यतिराजः; तदुत्तरे काले यः प्रथितो भविता भुवने दधानः सुविश्रुतं सरस्वत्युपनाम। तदा प्रसेदुः सर्वा दिशः, प्रावहत् प्रशान्तः समीरः, समीक्षाञ्चक्रिरे चामुं गगनोपगताः सानन्दाः सर्वे तत्पूर्वपुरुषाः साक्षान्मधुसूदनमिव धर्मविष्टम्भाय सुगृहीतजन्मानम्।




( क्रमशः )

# वृत्तवार्तिका

१९४६ खृष्टाब्दे बङ्गीयसंस्कृतसमिति-परीक्षाकालः ।—

श्रीमतां बङ्गीयसंस्कृत-समितिमन्त्रिमहोदयानां विज्ञप्तिपत्रानुसारेण विज्ञाप्यते यत ; १९४६ खृष्टाब्दीय-मार्चमासस्य चतुर्थपञ्चमदिवसयोः (१३५२ बङ्गाब्दीय सौरफाल्गुनमासस्य विंशैकविंशदिवसयोः) बङ्गीयसंस्कृत-समितेः प्रथमपरीक्षा, षष्ठसप्तमदिवसयोः (निरुक्तफाल्गुनस्य द्वाविंश-त्रयोविंशदिवसयोः) मध्यमपरीक्षा, अष्टमनवमदिवसयोः तथा एकादश-द्वादशदिवसयोः (निरुक्तफाल्गुनस्य चतुर्विंशपञ्चविंशदिवसयोस्तथा सप्त-विंशाष्टाविंशदिवसयोः) उपाधिपरीक्षा, त्रयोदशदिवसे च (निरुक्त-फाल्गुनस्य एकोनत्रिंशदिवसे) ऐच्छिकी आङ्गलभाषापरीक्षा भविष्यन्ति। तदर्थं १९४६ खृष्टाब्दीय-जानुयारीमासस्य पञ्चमदिवसं (वर्तमानबङ्गाब्दीय-सौरपौषस्य एकविंशदिवसं) यावत कार्यालयेन परीक्षार्थिभ्यः परीक्षायाः शुल्कमावेदनपत्रञ्च विना दण्डशुल्कं ग्रहीतव्ये। अतःपरं उपाधि-परीक्षार्थिनामावेदनपत्रं परीक्षायाः शुल्कञ्च दण्डशुल्केन निरुक्त-जानुयारीमासस्य दशमदिवसं (वर्तमानबङ्गाब्दीयसौरपौषस्य षड्विंश-दिवसं) यावत ग्रहणीये ।

---

संस्कृत-साहित्य-परिषत,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम—रूप्यकत्रयम् ३)
Foreign price—7s.

Printed by Dinabandhu Sahityashastri at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17. R. G. Kar Road, Calcutta.

